न वै चरसि यच्छ्रेय आत्मनो वा यदीहसे ।
अकामात्मापि हि सदा धुरमुद्यम्य चैव हि ॥ ६
अकिंचनः परिपतन्सुखमास्वादयिष्यसि ।
अकिंचनः सुखं शेते समुत्तिष्ठति चैव हि ॥ ७
आकिंचन्यं सुखं लोके पथ्यं शिवमनामयम् ।
अनमित्रमथो ह्येतद्दुर्लभं सुलभं सताम् ॥ ८
अकिंचनस्य शुद्धस्य उपपन्नस्य सर्वशः ।
अवेक्षमाणस्त्रींल्लँलोकान्न तुल्यमुपलक्षये ॥ ९

आकिंचन्यं च राज्यं च तुलया समतोलयम् ।
अत्यरिच्यत दारिद्र्यं राज्यादपि गुणाधिकम् ॥ १०
आकिंचन्ये च राज्ये च विशेषः सुमहानयम् ।
नित्योद्विग्नो हि धनवान्मृत्योरास्यगतो यथा ॥ ११
नैवास्याग्निर्न चादित्यो न मृत्युर्न च दस्यवः ।
प्रभवन्ति धनज्यानिनिर्मुक्तस्य निराशिषः ॥ १२
तं वै सदा कामचरमनुपस्तीर्णशायिनम् ।
बाहूपधानं शाम्यन्तं प्रशंसन्ति दिवौकसः ॥ १३

C. 12. 6374
B. 12. 176. 13
K. 12. 176. 13

---

Da3. a4 D4. 6. 9 य ईहसे; Dn1 T2 G1 M5. 6 Cn न (Dn1 य) ईशिषे; Dn4 यदीशिषे; D7 T1 G2. 3. 6 न रंस्यसे; M1. 7 न ईशसे (for यदीहसे). — K1 om. $6^{c}$–$8^{b}$. — c) T2 अजाद्यात्मा (for अकामात्मा). — d) K6 V1 Bo. 6–9 Da3 Dn1. n4 Ds D3. 5. 8 G1 M1. 5–7 चै(B6–9 वै)व ह; Da4 वै सह (for चैव हि). T1 G2. 3. 6 सुतमुत्पाद्य चैव हि (G6 ह).

7 K1. 4 om. 7 (cf. v. l. 6). K3 T G1–3. 6 om. (hapl.) 7. Ds1 transp. 6 and 7. D7 reads 7 after $8^{ab}$. — a) K6. 7 D9 M6 परितपन्; Cn °पतन् (as in text). — b) Ś1 B6. 7 (marg.) Da3. a4 Ds1 D4. 6. 8. 9 M1. 5–7 Ca सुखमासा(Ś1 Ds1 °स्वा)दयिष्यसि (Ś1 Ds1 M1. 5–7 °ति). — $7^{cd}$ is partly damaged in B7. — d) Ds2 सुखं तिष्ठति (for समुत्ति°). K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 M1. 5–7 ह (for हि).

8 K1 om. $8^{ab}$ (cf. v. l. 6). — a) D7 T1 G3. 6 शिवं (for सुखं). — b) Ś1 K2. 7 V1 D4. 9 चैतद्; T1 G2. 3. 6 सुखम् (for शिवम्). — After $8^{ab}$, D7 reads 7. — c) K4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 T G1. 3. 6 M1. 5–7 अन(V1 °नि)मित्र(V1 °त्त)पथो (for °मथो). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6–8 T G1. 3. 6 M5–7 ह्येष; D5 ह्येक; G2 M1 ह्येषां (for ह्येतद्). — d) K7 D4. 9 मतं (for सताम्). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 T G1. 3. 6 M1. 5–7 दुर्लभः सुलभो मतः (D7 T G1–3. 6 M1. 5–7 °भः सतां).

9 a) K1 नाकिंचनस्य. Ś1 K1. 2 सर्वस्य (for शुद्धस्य). — b) K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 सर्वतः (for °शः). ❀ Cn : उपपन्नस्य वैराग्यसंपन्नस्य । ❀ — c) K1 अवेक्षमानस्; B9 Da4 Ds1 D4. 6. 7. 9 अवेक्ष्यमाणस्. D6 ताल्लँ (for त्रील्लँ). — d) K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3 इह; V1 इति (for उप-).

10 a) K7 सम्यं (for राज्यं). — b) Ś1 K1. 2 Da4 T2 समतोलयन्; K4. 7 Ds1 D4. 7. 9 M1. 5–7 °तोलयत् (for °तोलयम्). — c) Ś1 K1. 2 D4 अति(D4 °त्या)रिच्यत. — d) G2 अभि (for अपि). T G1–3. 6 M1. 5–7 गुणाधिकात् (M1. 5. 7 °न्) (for °धिकम्).

11 a) K4 आकिंचन्यं; G1 आकिंचिन्ये (for °चन्ये). M1 न वा राज्ये; M7 च राज्ये वा. — c) D7 T2 G1. 3. 6 [ऽ]ति- (for हि). D4 om. (hapl.) from वान् up to धन (in $12^{c}$).

12 D4 om. up to धन (cf. v. l. 11). — a) Da4 D2 वादित्यो; Dn1. n4 Cal. ed. Cn चारिष्टो; D7 T1 G2. 3. 6 चामित्रो (for चादित्यो). ❀ Cn : न चारिष्ट इत्यत्र न चादित्य इत्यपपाठः । अरिष्टश्चोराद्युपप्लवः । ❀ — b) D7 T G1–3. 6 M1. 5–7 शत्रवः (for दस्यवः). — c) K6. 7 V1 Bo. 6. 7 Da3 Dn1. n4 Ds D2–6. 8. 9 धन(D4 om. धन)त्यागाद्; B8. 9 °ज्यान्या; Da4 °स्यान्या; D7 T G1–3. 6 M1. 5–7 धनं हर्तुम् (for धनज्यानि-). — d) K6 Bo. 6. 7 Da3 Dn1. n4 Ds D2. 3. 5. 8 विमुक्तस्य (for -निर्मु°). D7 T G1–3. 6 M1. 5–7 इतरे स्युः (M1. 7 °रेस्य; M6 °रस्य) कुतः पुनः.

13 a) K4 D9 ते (for तं). Ś1 K1. 2 D7 T काम॰चारम् (for °चरम्). — b) Da4 अनूपस्तीर्ण-; G2 अनुपास्तिभ्र-; M1 अनुविस्तीर्ण- (for अनुप°). — c) K4 बाहुप्रधानं; G2 °हूपदानं. Ds1 साम्यंतं; G6 शम्यंतं. — d) D7 T G1–3. 6 M5 स्पृहयंति (G1 °तं) (for प्रशंसन्ति).

14 a) G1 धनवान्लोभमोहाभ्याम्. — b) K4 आविष्टे. — c) K6 Ds1 तिर्यगक्षः; K7 Ds2 D2–6. 8. 9

C. 12. 6575
B. 12. 176. 14
K. 12. 173. 14

धनवान्क्रोधलोभाभ्यामाविष्टो नष्टचेतनः ।
तिर्यगीक्षः शुष्कमुखः पापको भ्रुकुटीमुखः ॥ १४
निर्दशंश्चाधरोष्ठं च क्रुद्धो दारुणभाषिता ।
कस्तमिच्छेत्परिद्रष्टुं दातुमिच्छति चेन्महीम् ॥ १५
श्रिया ह्यभीक्ष्णं संवासो मोहयत्यविचक्षणम् ।
सा तस्य चित्तं हरति शारदाभ्रमिवानिलः ॥ १६
अथैनं रूपमानश्च धनमानश्च विन्दति ।
अभिजातोऽस्मि सिद्धोऽस्मि नास्मि केवलमानुषः ।
इत्येभिः कारणैस्तस्य त्रिभिश्चित्तं प्रसिच्यते ॥ १७

स प्रसिक्तमना भोगान्विसृज्य पितृसंचितान् ।
परिक्षीणः परस्वानामादानं साधु मन्यते ॥ १८
तमतिक्रान्तमर्यादमाददानं ततस्ततः ।
प्रतिषेधन्ति राजानो लुब्धा मृगमिवेषुभिः ॥ १९
एवमेतानि दुःखानि तानि तानीह मानवम् ।
विविधान्युपवर्तन्ते गात्रसंस्पर्शजानि च ॥ २०
तेषां परमदुःखानां बुद्ध्या भैषज्यमाचरेत् ।
लोकधर्मं समाज्ञाय ध्रुवाणामध्रुवैः सह ॥ २१
नात्यक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परम् ।

---

°क्प्रेक्षी ; D7 T G1-3. 6 M1. 5-7 °ग्दृष्टिः (for °गीक्षः). D6 क्रुद्धमुखः (for शुष्क°). — d) Ds1 G1 M7 पावको ; T2 कोपको ; G2 प्रापको (for पापको). K4 त्रकुटी-मुखः ; K7 D4. 9 G1 भ्रूकुटी° ; Da4 Ds1 भ्रकुटी° ; G2 भ्रकुटीमुखं.

15 a) T1 G2. 6 निर्दइय ; G1 निर्दयश्च (for °दंशंश्च). K1. 2 चाधरौष्ठं ; K6. 7 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2-9 अधरो( B9 Ds1 D8 °रौ )ष्ठं ; G1 चाधरोष्ठश्च (for °रोष्ठं). Ś1 K1. 2. 4 तु ; T G2. 6 स (for च). G3 निर्दइय चाधरोष्ठस्य ; M1. 5-7 निर्दशंश्चैवाधरोष्ठं. — b) K2. 6 Bo M1 -भाषितः (for -भाषिता). — c) Ds1 कृत्स्नम् (for कस्तम्). D4. 6. 7. 9 इच्छति वै (for इच्छे-त्परि-). T1 -पृष्ठं ; T2 G2. 3. 6 -प्रष्टुं (for -द्रष्टुं). — d) Ds1 चेन्महं ; M7 °हीन्. K4 दातुमिच्छेन्महीमिमां.

16 a) K2. 4. 7 B9 D2-4. 9 T G1-3. 6 M5. 6 ह्यभी-क्ष्ण- ; Dn1 न्वभीक्ष्णं ; M1 [अ]भ्यभीक्ष्ण- (for ह्यभी-क्ष्णं). Ś1 K1. 2 G2 संवासं ; M1 -संवादो (for संवासो). — b) Ś1 K1. 2. 4 अविचक्षणः (K4 °क्षण) (for °चक्ष-णम्). — c) D7 T G1-3. 6 M1. 5-7 सोस्य चि( G2 वि )त्तं विकि( M1. 5. 7 °ह )रति. — d) K4 इवानिल ; G2 °निलं.

17 a) D7 T1 अथेदं (for अथैनं). D8 T1 रूप-मानं ; G3. 6 °मानैश्च (for °मानश्च). — b) D8 T1 धनमानं (for °मानश्च). G2 (also as in text) मुंचति (for विन्दति). — c) K4 अतिजातो (for अभि°). D5. 8 शुद्धो (for सिद्धो). — e) M5 इत्येतैः (for °भिः). — f) Ś1 (by corr.) प्रसिज्यते ; K4 °इयते ; K6 Bo. 6. 7. 8 (marg. as in text) Dn1. n4 Ds D2. 3. 5. 8 प्रमाद्यति ; Da3. a4 T1 Ca प्रसज्यते ; D6 G2 प्रसि( G2 °सा )ध्यते (for °च्यते). ❀ Ca: प्रसज्यते इति पाठः, संप्रसक्तमना इत्यग्रे पाठात् । ❀

18 = 12. 28. 8. — a) Ś1 K6 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 संप्रसक्तमना ; K1. 2. 4. 7 D4. 9 स प्रसक्त° ; V1 M1. 5-7 संप्रसिक्त° ; T2 न प्रसक्त° ; G1. 2 अप्रसिक्त° (for स प्र°). D4 G1 भागान् (for भो°). — b) G3 असृज्य (for वि°). K7 D4. 9 चिर- (for पितृ-). — d) K2 स्वादु ; D7 T G1-3. 6 M1. 5-7 बहु (for साधु).

19 = (var.) 12. 28. 9. — a) B8 अभिक्रांत- (for अति°). K7 -मर्यादाम् (for °दम्). — b) D7 T G1-3. 6 M5 असांप्रतं (for ततस्ततः). B6 (marg.) आददानामत-स्ततः. — c) K4 प्रतिषिधंति ; Bo °षेधयंति ; B6 (marg.) निषेधयंति. — d) = 3. 198. 26d.

20 = (var.) 12. 28. 13. — a) B8 (marg.) एवमादीनि (for °मेतानि). — b) Ś1 K1. 2. 4 तानीव (for °ह). — c) K6 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 M6 उपपद्यंते (for °वर्तन्ते). — d) K7 -संस्प-र्शनानि (for °जानि). K6 Bo. 7 Da3 Dn1. n4 Ds D2. 3. 5. 8 [अ]पि (for च).

21 b) Ś1 K1. 2. 4 Ca भेषज( K2 °ज्य )म्. — c) K7 एवं सर्वे ; D1-6. 8. 9 एवंधर्मं ; D7 G2. 3. 6 लोके धर्मं (for लोकधर्मं). Ś1 K2. 4 समास्थाय ; K6 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2. 3 अव( V1 D8 °वि )-ज्ञाय ; K7 B8 (marg.) D1-6. 8. 9 समाधाय (for °ज्ञाय). — d) B9 लोकानाम् (for ध्रुवाणाम्).

22 b) G1 M1. 7 महत् (for परम्). — c) B9 D7 T G1-3. 6 M5 निर्भयः ; D2 चाभयः ; D8 चालयः (for चाभयः). — d) D7 T G1-3. 6 M5 transp. त्यक्त्वा and सर्वं. K6. 7 Dn1 Ds D4. 6. 7. 9 T G2. 3. 6 M1. 5-7

नात्यक्त्वा चाभयः शेते त्यक्त्वा सर्वं सुखी भव ॥ २२
इत्येतद्धास्तिनपुरे ब्राह्मणेनोपवर्णितम् ।
शम्याकेन पुरा मह्यं तस्मात्त्यागः परो मतः ॥ २३

इति श्रीमहाभारते शान्तिपर्वणि सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

## १७१

युधिष्ठिर उवाच ।
ईहमानः समारम्भान्यदि नासादयेद्धनम् ।
धनतृष्णाभिभूतश्च किं कुर्वन्सुखमाप्नुयात् ॥ १
भीष्म उवाच ।
सर्वसाम्यमनायासः सत्यवाक्यं च भारत ।
निर्वेदश्चाविवित्सा च यस्य स्यात्स सुखी नरः ॥ २
एतान्येव पदान्याहुः पञ्च वृद्धाः प्रशान्तये ।
एष स्वर्गश्च धर्मश्च सुखं चानुत्तमं सताम् ॥ ३
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
निर्वेदान्मङ्किना गीतं तन्निबोध युधिष्ठिर ॥ ४
ईहमानो धनं मङ्किर्भग्नेहश्च पुनः पुनः ।
केनचिद्धनशेषेण क्रीतवान्दम्यगोयुगम् ॥ ५
सुसंबद्धौ तु तौ दम्यौ दमनायाभिनिःसृतौ ।
आसीनमुष्ट्रं मध्येन सहसैवाभ्यधावताम् ॥ ६

C. 12. 6591
B. 12. 177. 6
K 12 176. 6

---

भवेत् ( for भव ).

23 a) T2 G1 M5 हस्तिनपुरे. —b) Ś1 K1.2.4 ब्राह्मणैर् ( for °णेन ). Ś1 K1.2.4.7 D4.6.9 अनु- ( for उप- ). M1 -वर्तितुं ( for -वर्णितम् ). —c) K1.4.6.7 V1 B0.6-9 Da3.a4 Dn1.n4 Ds D2-6.8.9 शं( V1 B6 सं )पाकेन; D7 T1 G2.3.6 शम्यकेन ( for शम्या° ). Ś1 K1.2.4 विमुक्तेन; Ds पुरा गीतं ( for पुरा मह्यं ). —d) K7 D4.6.9 मम ( for मतः ).

Colophon. —*Sub-parvan* : Ś1 K1.2.4.6.7 V1 B0.6-9 Da3.a4 Dn1.n4 Ds D2-9 T2 G1.2.6 M1.5-7 मोक्षधर्म. —*Adhy. name* : Ś1 K2 G2 M1.5-7 शम्याकगीता; K1 D9 शस्पाकगीता; K4.6.7 B0.6-9 Da3.a4 Dn1 Ds D2-6.8 शंपाकगीता; V1 संपाकगीता; D7 G3.6 शम्यकगीता. —*Adhy. no.* ( figures, words or both ): Dn1.n4 Ds D2.7 T1 G1.3.6 M1.5-7 3; D8 2; T2 G2 17. —*Śloka no.* : Dn1 23.

## 171

1 G6 om. the ref. —a) K7 Da4 Dn4 इहमानः. D4.6.9 T2 समारंभाद्; G2 सदारंभान् ( for समा° ). —b) K1 नापादयेद् ( for नासा° ). Ds परं ( for धनम् ). —d) T1 कुर्यात् ( for कुर्वन् ). M5 धनम् ( for सुखम् ).

2 a) D7 अनायासं; Cs अनायासः ( as in text ). ❀ Cs : अनायासः सर्वकाम्यकर्मत्यागः । ❀ —c) Ś1 ( orig.; *sec. m.* as in text ) K1.6.7 B7.9 D4.5.7.9 G3.6 M1 विवित्सा; V1 B0.6 Da3 Dn1.n4 D6.8 Cs [अ]विधित्सा; B6 ( marg. ).8 Ds Cnp.sp विधित्सा; T1 [अ]विवत्सा ( for [अ]विवित्सा ). V1 तु ( for च ). ❀ Cn : विधित्सेति पाठे श्रवणादीच्छा ॥ Cs : अविधित्सा धनप्राप्तिवैतृष्ण्यम् । ❀ — K1 om. $2^{d}$–$3^{c}$.

3 K1 om. $3^{abc}$ ( cf. v. l. 2 ). —b) D8 वृद्धाः ( for वृद्धाः ). Da3.a4 मनीषिणः ( for प्रशान्तये ). —c) M7 एषु ( for एष ). Da3 om. धर्मश्च. D4-6.8.9 M6 एष धर्मश्च स्व( D4.9 स )र्गश्च. —d) D4 चानुत्तमा. K6 V1 B0.6-9 Da3.a4 Dn1.n4 Ds D2.3.5.6.8 मतं ( for सताम् ).

4 c) Ds1 निर्वेदं ( for °दान् ).

5 a) K7 D2 इहमानो; T2 ईहामानो. Da4 T2 G1 मंकी ( for मङ्किर् ). Ś1 K1.2.4 सुखमिच्छंस्तदा मंकिर् ( K1.4 शंकिं ). —b) G1 भग्नेच्छश्; Cn °हश् ( as in text ). —c) Ds2 D7 T1 G3.6 केनापि; M7 ( *sup. lin.* as in text ) येनचिद् ( for केनचिद् ). D7 T G1-3.6 -लेशेन ( for -शेषेण ). —d) K6 क्रांतवान्; G1 कृत° ( for क्रीत° ). Da4 Ds1 दंपगोयुगं; D3.5 दम्ययोर्युगं ( for °गोयुगम् ).

6 D4 reads $6^{ab}$ twice. —a) K1 ससंबद्धौ; K2 V1 B6.8 ( marg. as in text ).9 Da3.a4 Ds असंबद्धौ;

C. 12. 6593
B. 12. 177. 7
K. 12. 176. 7

तयोः संप्राप्तयोरुष्ट्रः स्कन्धदेशममर्षणः ।
उत्थायोत्क्षिप्य तौ दम्यौ प्रससार महाजवः ॥ ७
ह्रियमाणौ तु तौ दम्यौ तेनोष्ट्रेण प्रमाथिना ।
म्रियमाणौ च संप्रेक्ष्य मङ्किस्तत्राब्रवीदिदम् ॥ ८
न चैवाविहितं शक्यं दक्षेणापीहितुं धनम् ।
युक्तेन श्रद्धया सम्यगीहां समनुतिष्ठता ॥ ९

कृतस्य पूर्वं चानर्थैर्युक्तस्याप्यनुतिष्ठतः ।
इमं पश्यत संगत्या मम दैवमुपप्लवम् ॥ १०
उद्यम्योद्यम्य मे दम्यौ विषमेणेव गच्छति ।
उत्क्षिप्य काकतालीयमुन्माथेनेव जम्बुकः ॥ ११
मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम ।
शुद्धं हि दैवमेवेदमतो नैवास्ति पौरुषम् ॥ १२

---

K4 असंबाधौ; D6 सुसंबुद्धौ; Cnp असंबद्धौ (for सुसंबद्धौ). V1 च तौ; D4 नु तौ; T2 G1 M5 कृतौ (for तु तौ). — Ś1 (orig.) K2. 4 om. (hapl.) $6^{b}$–$7^{c}$, Ś1 (*sec. m.*) supplying the om. on marg. — $^{b}$) T2 गमनाय (for दम°). D4 (second time) [अ]भिनिःसृता; D7 T1 G2 [अ]भिनिर्वृतौ; G3. 6 °निष्ठितौ (for °निःसृतौ). G1 दमनादंतिकः स्मृतौ. — $^{c}$) Ś1 दम्येन; K1 भास्येन (for मध्येन).

7 Ś1 (orig.) K2. 4 om. $7^{abc}$ (cf. v. l. 6). Ś1 reads $7^{abc}$ on marg. — $^{a}$) Da4 स प्राप्तयोर्. Ś1 दांतः (for उष्ट्रः). — $^{b}$) K7 अकर्षणः; M6 अमर्षणं. — $^{c}$) G2 [उ]त्थाय (for [उ]त्क्षिप्य). D7 T G1–3. 6 दम्यौ तौ (by transp.); D9 तौ दस्यौ. ❀ Cn: उत्क्षिप्य तुलाभाजनद्वयवदुपरि भूमेर्नीत्वा । ❀ — Ś1 reads $7^{d}$ twice. — $^{d}$) Ś1 (second time) शाखादंताहितौ हि तौ.

8 $^{a}$) K6 Ds2 D2. 3. 5. 8 T1 G3. 6 ह्रीयमाणौ; K7 ह्रियमानौ; G2 ह्रीयमाणौ (for ह्रिय°). B7 damaged from म्यौ up to म्रियमा (in $8^{c}$). — $^{b}$) Dn1 ततो (for तेन). K1 प्रधाविना (for प्रमाथिना). — $^{c}$) K7 म्रियमानौ; D7 G2 ह्रियमाणौ; T1 G3 ह्रीय° (for म्रिय°). B9 Da4 Ds1 D5. 7. 8 T G1–3. 6 M5. 6 तु (for च). — $^{d}$) K6 तदा (for तत्र). G2 transp. अब्रवीत् and इदं.

9 $^{a}$) D7 T G1–3. 6 M1. 5–7 जातु (for चैव). K1 [अ]विहितुं. — $^{b}$) D6 दाक्षेण. D7 T G1–3. 6 M1. 5. 6 दक्षेणाप्तुं धनं क्वचित्; Cnp दक्षेणापीहितं धनं. — $^{d}$) D9 G1 ईहां (G1 °षां) समनुतिष्ठतां.

10 $^{a}$) K6 वृतस्य; Ds2 क्षतस्य (for कृतस्य). K6 Dn1. n4 Ds1 Cnp नानार्थैर्; V1 Bo. 8. 9 Ds2 D6 नानर्थैर् (for चा°). K7 D4. 5. 8. 9 पूर्वमर्थैर्विमुक्तस्य; D7 T G1–3. 6 M1. 5–7 पूर्वमर्थै(D7 T1 G3. 6 °पुण्यैः; M7 °मत्तै)र्विहीनस्य. — $^{b}$) T1 युक्तस्य ननु (for °स्याप्यनु°). — $^{c}$) Ś1 K1. 2. 7 B7. 8 D4. 9 इदं (for इमं). G2 पश्यतु. Dn4 संगस्य; D7 T1 G2. 3. 6 संगम्य (for °त्या). — $^{d}$) D7 T G1–3. 6 M1. 5–7 दैवाद् (for दैवम्). Ś1 K1. 2. 4 उपप्लुतं (K4 °तः); K7 D4. 9 °स्थितं (for °प्लवम्).

11 $^{a}$) B7 damaged from उद्यम्य up to ताली (in $11^{c}$). Ś1 K1. 2 D4 उदम्य; K4 Da3. a4 तदम्य; D8 उद्यम (for उद्यम्य). K2 [उ]दम्य; K6 Bo. 6. 8. 9 Da3. a4 D2. 3. 6. 8 [उ]त्क्षिप्य; K7 D4. 9 करभौ; B8 (marg.) [उ]त्क्रम्य (for [उ]द्यम्य). D7 T1 G2. 3. 6 तौ (for मे). K1. 2 दस्यौ; D4 M1 दम्यो. — $^{b}$) Ś1 K2. 4 विशेषेणैव; Ś1 (*sup. lin.*) K6 D2. 3 विष(Ś1 °श)मेनैव; K1 विशसेनैव (for विषमेणेव). Ś1 K1. 2. 4 V1 B6 Dn1. n4 D8 गच्छतः (for °ति). — $^{c}$) B9 lacuna; T2 G1 °ताळीयम् (for °तालीयम्). — $^{d}$) Ś1 उन्माथ्येनेव; K1 corrupt; K2. 4. 7 Da3. a4 Dn4 D9 M6 उन्माथेनैव; K6 V1 B7. 9 Dn1 D8 D3. 6 T G1–3. 6 M1. 5. 7 Cpp. Cs उत्पथेनै(Cpp °ने)व; M6 उन्माथमिव; Ca उन्मथ्येनेव (for उन्माथेनेव). K6. 7 (marg.) Bo. 7 Dn1 D8 D3 धावतः; K7 (orig.) B8 Dn4 D2. 4–6. 8. 9 Cpp जंबुकौ; V1 B6. 9 Da3. a4 Cnp °कं (for °कः). K2. 4 शाखादेनार्दि(K2 °दि)तौ हि तौ. ❀ Ca: उन्मथ्येन कूटयन्त्रेण यथा कश्चिज्जम्बुको हतः । also: यथा उन्माथमध्यपतितो जम्बुकस्तमादायैव गच्छति ॥ Cn: मेषयोर्युध्यतोः परस्परशिरःसंघट्ट उन्माथस्तेन दैवान्मध्ये प्रविष्टो जम्बुकोऽतिपीडनान्ममार ॥ Cp: उन्माथेन स्फुटयन्त्रेण जम्बुकमिवोत्क्षिप्य ॥ Cs: तालवृन्तासन्नपतता काकेन यदृच्छया पातितं तत्फलं काकतालीयम् । तच्चाधःस्थितजम्बुकोपरि पतितम् । ततो यथा जम्बुको बभ्रामेत्यर्थः । उन्माथेनेव जम्बुक इति क्वचित्पाठः । उन्माथः कूटयन्त्रं स्यात्पाशयन्त्रं क्वचिद्भवेत् । दुष्टमृगवधार्थकल्पितयन्त्रे जम्बुको मृतो यथेत्यर्थः । Cv: उन्माथेन, उन्नम्य मथ्नातीति उन्माथो यन्त्रकृतजालविशेषः । जम्बुकमिव, जम्बुकं यथा प्राप ॥ ❀ — After 11, Dn4 D2. 5. 8 ins.:

471* उत्पथेनैव धावन्तमुत्पथेनैव धावतः ।

12 $^{a}$) K7 D4 चोष्ट्रस्य (for वो°). K6 D2 लंबते; Dn4 लंबेति; T1 °त (for °ते). — $^{b}$) Da4 क्षिप्रौ; D8 शुभौ; M5 दम्यौ (for प्रियौ). G1 प्रियावदितरौ मम. — $^{c}$) G3. 6 इत्थं (for शुद्धं). D4 हि देवम्;

यदि वाप्युपपद्येत पौरुषं नाम कर्हिचित् ।
अन्विष्यमाणं तदपि दैवमेवावतिष्ठते ॥ १३
तस्मान्निर्वेद एवेह गन्तव्यः सुखमीप्सता ।
सुखं स्वपिति निर्विण्णो निराशश्चार्थसाधने ॥ १४
अहो सम्यक्शुकेनोक्तं सर्वतः परिमुच्यता ।
प्रतिष्ठता महारण्यं जनकस्य निवेशनात् ॥ १५
यः कामान्प्राप्नुयात्सर्वान्यश्चैनान्केवलांस्त्यजेत् ।
प्रापणात्सर्वकामानां परित्यागो विशिष्यते ॥ १६
नान्तं सर्वविवित्सानां गतपूर्वोऽस्ति कश्चन ।
शरीरे जीविते चैव तृष्णा मन्दस्य वर्धते ॥ १७
निवर्तस्व विवित्साभ्यः शाम्य निर्विद्य मामक ।
असकृच्चासि निकृतो न च निर्विद्यसे तनो ॥ १८
यदि नाहं विनाश्यस्ते यद्येवं रमसे मया ।
मा मां योजय लोभेन वृथा त्वं वित्तकामुक ॥ १९

C. 12. 6604
B. 12. 177. 19
K. 12. 178. 19

---

G1 तदैवम् ( for हि दैवम् ). B3 ( marg. as in text ). 9 Da4 एवेह ( for एवेदम् ). — d) K6 V1 Bo. 6 (marg.). 7–9 Da3 Dn1. n4 Ds D5. 6. 8 Cn. p हठेनैवास्ति ( Ds1 °स्मि ); K7 D4. 9 M6 हठो वा नास्ति; B6 हस्ते नैवास्ति; M1. 7 एतेनैवास्ति ( for अतो नैवास्ति ). Ds1 पौरुषः. ❀ Cn: हठेनैव मूढनिर्बन्धेनैव पौरुषमस्ति न तु तद्विद्वद्दृष्ट्या । नैवेति पदविभागो वा । ❀

13 a) K7 D4 च ( for वा ). D7 T G1–3. 6 M1. 5 [अ]भि· ( for [अ]पि ). — T2 om. $13^{bc}$. — b) D2. 3 नैव ( for नाम ). — c) K1 अन्विष्टमाणं; M1 अन्वीक्ष्य°. — d) K6 [अ]वतिष्ठति; B8 ( marg. ) °शिष्यते; Ds M1. 5–7 [अ]नुतिष्ठति.

14 a) V1 Bo. 6. 7. 8 ( marg. as in text ). 9 Da3. a4 Dn1 Ds D6. 7. 9 T G1–3. 6 M7 Cnp निर्वेदम्. ❀ Cn: निर्वेदमिति पाठे क्लीबत्वमार्षम् । ❀ — b) K6 V1 Bo. 6. 8 ( marg. as in text ). 9 Da3 Ds D6. 7 T G1–3. 6 M1. 5–7 गंतव्यं; D4 °व्या ( for °व्यः ). B7 damaged from व्यः up to निराशश्चा ( in $14^{d}$ ). K4. 6 V1 Bo. 6. 8. 9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 M1 इच्छता ( for ईप्सता ). — d) G1 [अ]थ ( for [अ]र्थ· ). K6 -दर्शने; B8 -साधनं.

15 b) Ś1 K1. 2. 4 परिमुंचथ; Dn4 °मुच्यत; D4 °मुद्यता ( for °मुच्यता ). — B9 om. $15^{cd}$. — c) K1 प्रतिष्ठिता. K4 मतारण्यं ( for महा° ). D7 T G1–3. 6 M1. 5–7 प्रतिष्ठमानेनारण्यं. — d) D7 G3. 6 नियोजनात् ( for निवेश° ).

16 With 16, cf. Manu. 2. 95. M5 om. 16. — a) D7 T G1 यत् ( for यः ). K6 Bo. 7 Dn1. n4 Ds D2. 3. 5 आप्नुयात्; D8 चाप्नु° ( for प्राप्नु° ). D4 om. from यात्स up to विवि ( in $17^{a}$ ). — b) T1 यच् ( for यश् ). K4. 6. 7 Bo. 6–8 Da3. a4 Dn1. n4 Ds D2. 3. 5–9 T G2. 3. 6 चैतान् ( for चैनान् ). K6 केवलं; Da4 °लास्.

17 D4 om. up to विवि ( cf. v. l. 16 ). — a) K7 नांत- ( for नान्तं ). G1 पूर्व- ( for सर्व- ). K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–6. 8 Cn. p. s -विधित्सानां; D7 T G1–3. 6 M1. 5–7 -विवित्साया; Ca -विवित्साभ्यः ( for °त्सानां ). ❀ Ca: विवित्साभ्यः वाञ्छाभ्यः ॥ Cn: विधित्सानां धनाद्यर्थं प्रवृत्तीनाम् ॥ Cp विवित्सा विचारणेच्छा । अविधित्सेति पाठे प्रतिकारानिच्छा । ❀ — b) B2 Ds1 गतः ( for गत· ). — c) D4 वैव ( for चैव ). — d) T2 M1. 5–7 मर्त्यस्य; G1 मध्यस्य ( for मन्दस्य ). B6 T2 ( also as in text ) G1. 3. 6 M6 वर्तते ( for वर्धते ).

18 a) K1 विवर्तस्व; K2 निवर्तस्य; K7 D4. 9 निवृत्तस्य; B6. 7. 9 निर्विण्णस्य ( for निवर्तस्व ). K4. 6 V1 Bo. 6. 7. 8 ( marg. as in text ). 9 Dn1. n4 Ds D3. 5. 6. 8 T1 विधि( T1 °व )त्साभ्यः ( for विवि° ). — b) K7 D4. 9 शाम्येन्; D7 T1 G2. 3. 6 जातु ( for शाम्य ). D6 निर्विण्ण ( for °द्य ). K4. 6 B6. 7. 8 ( marg. as in text ). 9 Da4 Dn1. n4 Ds D2. 3. 5. 8 Cn. p कामुक ( B9 °कं; Ds2 °कः ); K7 D4. 6. 9 G1 मानसं; T G2. 3. 6 M1. 7 मामकं ( M1 °कः ); Cnp हे मनः; ( also ) मानस ( for मामक ). Csp न च निर्विद्यसे मनः. ❀ Ca: निर्विद्य विरजो भव ॥ Cn निर्विद्य वैराग्यं प्राप्य । ❀ — c) Ś1 ( also as in text ) K2 चास्य; V1 Bo. 8 ( marg. as in text ) Da4 D7 T G3. 6 चापि; D8 वापि; D9 यासि ( for चासि ). B9 निःकृतो. — d) K4. 7 Dn4 ततः; K6 नरः; Dn1 Ds2 D7 T G1–3. 6 M1. 5–7 मनः; Ds1 वनः; D2. 3. 5. 8 नर ( for तनो ). V1 Bo. 6–9 Da3. a4 D4. 9 न च निर्विद्यसीतर.

19 a) B8 ( marg. ) Da3. a4 Ca निर( Ca °रा )स्यस्; Dn4 विनाश्यं; Ds1 विनश्यस्; D8 विनाशस् ( for °श्यस् ). — b) K7 D4–6. 9 यदि वा; Dn4 यदेवं; Ds2 यद्येव ( for °वं ). G1 मन्यसे ( for रमसे ). Dn4 त्वया ( for मया ). — c) K1. 2. 4 Dn4 मा मा ( for मा मां ). — d) G1. 2 यथा ( for वृथा ). K7 स्वचित्त-; Da4 स्ववित्त-; D4 त्वं चित्त-; G2 त्वं वृत्त- ( for त्वं वित्त- ).

C. 12. 6603
B. 12. 177. 20

संचितं संचितं द्रव्यं नष्टं तव पुनः पुनः ।
कदा विमोक्ष्यसे मूढ धनेहां धनकामुक ॥ २०
अहो नु मम बालिश्यं योऽहं क्रीडनकस्तव ।
किं नैव जातु पुरुषः परेषां प्रेष्यतामियात् ॥ २१
न पूर्वे नापरे जातु कामानामन्तमाप्नुवन् ।
त्यक्त्वा सर्वसमारम्भान्प्रतिबुद्धोऽस्मि जागृमि ॥ २२
नूनं ते हृदयं काम वज्रसारमयं दृढम् ।
यदनर्थशताविष्टं शतधा न विदीर्यते ॥ २३
त्यजामि काम त्वां चैव यच्च किंचित्प्रियं तव ।
तवाहं सुखमन्विच्छन्नात्मन्युपलभे सुखम् ॥ २४
काम जानामि ते मूलं संकल्पात्किल जायसे ।
न त्वां संकल्पयिष्यामि समूलो न भविष्यसि ॥ २५
ईहा धनस्य न सुखा लब्ध्वा चिन्ता च भूयसी ।
लब्धनाशो यथा मृत्युर्लब्धं भवति वा न वा ॥ २६
परेत्य यो न लभते ततो दुःखतरं नु किम् ।
न च तुष्यति लब्धेन भूय एव च मार्गति ॥ २७

---

K4 G1 -कार्मुक ( G1 °कं ); K7 D4. 9 -मामक ( D4 °कं ); Da4 Dn4 M1. 6 -कामुकः ( for °क ).

20 $^{a}$) K7 D4. 9 सर्वतो; Da3 lacuna ( for the second संचितं ). D7 T G1-3. 6 M1. 5-7 वित्तं ( for द्रव्यं ). — $^{b}$) Ś1 K1. 2 transp. नष्टं and तव. K2 om. the second पुनः. — $^{c}$) K1 यदा ( for कदा ). K4. 6 V1 B0. 6. 8 9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 G1 कदाचि( G1 °दा ता )न्मोक्ष( K4. 6 B6. 9 Da3 Dn4 D8 °क्ष्य )-से मूढ; M1. 5-7 न च निर्विद्यसे मूढ. — $^{d}$) B8 धनहां; G2 धनेहं. K4 -कार्मुक; Da4 -कामुकं; M1. 6. 7 -कामुकः. — After 20, M5 ins. 473*, followed by:

472* परिपन्थिक सर्वस्य श्रेयसः पापसंश्रय ।

21 $^{a}$) D7 T G1-3. 6 M1. 5-7 हि ( for नु ). — $^{b}$) G1 क्रीडनवत् ( for °नकस् ). — D7 T G1-3. 6 ins. after 21$^{ab}$: M5 after 20:

473* क्लेशैर्नानाविधैर्नित्यं संयोजयसि निर्घृण ।

— $^{c}$) K4. 6 Da3 Dn1. n4 किं नैवं; K7 B7 D6 किं त्वेव; B8 Da4 Ds D3. 5. 8 किं त्वेवं; B9 Cs किं न्वेवं; D4. 9 किं न्वेव; D7 T1 G2. 3 को न्वेव; T2 G6 M1. 5-7 को न्वेवं; G1 को वै स ( for किं नैव ). B0 जाति-; M1 जात- ( for जातु ). — $^{d}$) K7 प्रेक्ष्यताम्.

22 $^{a}$) Ś1 K1. 2. 4 Ds2 न पूर्वे न ( Ś1 K1 पूर्वेण ) परे जातु; G1 न पूर्वो न परो जातु. — $^{b}$) K2 Da4 Ds1 G1 आप्नुयात् ( for °वन् ). — $^{c}$) K2 पूर्व- ( for सर्व- ). — $^{d}$) K4. 7 प्रतिबुद्धास्मि.

23 $^{a}$) D7 T G1-3. 6 M1. 5. 7 मे ( for ते ). V1 D7 T G1 कामं ( for काम ). — $^{b}$) D8 damaged from दृढम् up to दीर्य ( in 23$^{d}$ ). G3. 6 वज्रसाधारणध्रुवं ( G6 °णं दृढं ). — $^{c}$) T1 G2. 3 यदनर्थं ( for °र्थ- ). B9 -गताविष्टं; T1 G3. 6 -शताक्लिष्टं; G2 -सदाश्लिष्टं ( for -शताविष्टं ). D7 यदर्थं शतधा दृष्टं; D6. 8 यदर्थनाशेनाविष्टं. — $^{d}$) G1 शतधारं ( for °धा न ). D7 T1 G1. 2 हि शी( T1 जी )र्यते; T2 विशी° ( for विदी° ).

24 $^{a}$) K4 त्यक्तास्मि; K6 V1 B0. 6-9 Da3. a4 Dn1. n4 Ds D3 ( marg. as in text ) जानामि ( for त्यजामि ). D7 T कामं ( for काम ). Da4 त्वा. D6 लुब्ध जानामि काम त्वां. — $^{c}$) K6 V1 B0. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 6 M1. 7 प्रियम्; M5 प्रीतिम् ( for सुखम् ). — $^{d}$) D6 अलभते ( for उपलभे ).

25 With 25, cf. Vṛddhaśātātapa Smṛti 64. — $^{a}$) K2 T2 G1 M1 कामं ( for काम ). — $^{b}$) K7 D4. 6. 9 त्वं हि; Da4 केन ( for किल ). K6 B8 ( marg. as in text ) Da4 Dn1 जायते ( for °से ). — $^{c}$) G1 M1. 7 त्वा ( for त्वां ). — $^{d}$) D7 T1 G1-3. 6 ततो मे ( for समूलो ). K7 D3 ( marg. ). 6. 8. 9 विनशिष्यसि; Da4 Dn1 न भविष्यति.

26 $^{a}$) D7 T1 G3. 6 सुखस्य ( for धनस्य ). Ś1 K1. 2. 4 सुखाल्; B9 स्वका; D7 T1 G3. 6 सुखं ( for सुखा ). G2 ईषा सहस्य न सुखं ( sic ). — $^{b}$) K6 Dn1 D2. 6 M5 लब्धे; V1 B9 Da3. a4 Ds लब्ध-; B0. 6-8 Dn4 D3-5. 7. 8 T1 G2. 3. 6 लब्धा ( for लब्ध्वा ). K2 चिंतां; V1 B8 ( marg. ). 9 Da3. a4 -वित्ता ( for चिन्ता ). K2 भूयसीं. — $^{c}$) K4 B8 ( marg. ). 9 Da3 Dn1. n4 D2 लब्धनाशे ( for लब्धनाशो ). B7 damaged from यथा up to लभते ( in 27$^{a}$ ). — $^{d}$) Ś1 K1. 2 लब्ध्वा; K7 D4-6. 8. 9 लाभो; B8 ( marg. ) लब्धो ( for लब्धं ).

27 B7 damaged up to लभते. — $^{a}$) K2. 4. 6. 7 V1 B0. 6. 8 Da3. a4 D2. 3. 5. 6. 8 Cnp परेभ्यो यो; B6 ( marg. ). 8 ( marg. ) परीतं यो; Dn1. n4 Ds D7 T G1-3. 6 M1. 5-7 परित्यागे ( M1. 6. 7 °गं ); D4 परेभ्यो वो ( for °त्य यो as in Ś1 K1 B9 D9 only ). K6 लभ्येत ( for

अनुतर्षुल एवार्थः स्वादु गाङ्गमिवोदकम् ।
मद्विलापनमेतत्तु प्रतिबुद्धोऽस्मि संत्यज ॥ २८
य इमं मामकं देहं भूतग्रामः समाश्रितः ।
स यात्वितो यथाकामं वसतां वा यथासुखम् ॥ २९
न युष्मास्विह मे प्रीतिः कामलोभानुसारिषु ।
तस्मादुत्सृज्य सर्वान्वः सत्यमेवाश्रयाम्यहम् ॥ ३०
सर्वभूतान्यहं देहे पश्यन्मनसि चात्मनः ।
योगे बुद्धिं श्रुते सत्त्वं मनो ब्रह्मणि धारयन् ॥ ३१
विहरिष्याम्यनासक्तः सुखी लोकान्निरामयः ।
यथा मा त्वं पुनर्नैवं दुःखेषु प्रणिधास्यसि ॥ ३२
त्वया हि मे प्रणुन्नस्य गतिरन्या न विद्यते ।
तृष्णाशोकश्रमाणां हि त्वं काम प्रभवः सदा ॥ ३३
धननाशोऽधिकं दुःखं मन्ये सर्वमहत्तरम् ।
ज्ञातयो ह्यवमन्यन्ते मित्राणि च धनच्युतम् ॥ ३४

C. 12. 6619
B. 12. 177. 34
K. 12. 176. 34

---

लभते). ❀ Ca : परेत्य चिन्तयित्वा ॥ Cn : परेभ्यो यो न लभते इति पाठे, परेभ्यः सेव्यमानेभ्यः । ❀ — c) K4 D4. 6. 9 लाभेन (for लब्धेन). B6. 9 तु (for च). K6. 7 V1 B0. 7–9 Da3. a4 Ds D2–9 T G1–3. 6 M1. 5–7 मार्गते (for °ति).

28 a) K6 B7. 9 Cp अनुतर्पुलम्; K7 अतितर्पुल; B6 अर्थतर्पुलम्; Da3. a4 अनुतर्पणम् (Da4 °ण); D2. 3 अतितर्षुलम्; D7 अनुतर्पुस्तम्; D8 अतितर्पुस्तम्; T1 G1–3. 6 अनुतर्षित; T2 अभूतपूर्वम्; Ca अनुतर्षुल (as in text). K6. 7 V1 D4. 6. 7 T G1–3. 6 M1. 5. 6 एवार्थं; B0. 8 Da3. a4 M7 एवार्थान्; D8 (*sup. lin.*). 5. 8 एवात्र (for °र्थः). Cv अनुतर्षुस्तमेवार्थं. ❀ Cn : अनुतर्पुलः तृष्णावृद्धिकृत् ॥ Cp : अनुतर्षुलं तर्षप्रवाहानुवर्तकम् ॥ Cs (reading अत्र तर्षुल भावार्थे [?]) हे भाव चित्त, अर्थे प्रत्यनुभवेनागततृष्ण । ❀ — b) Ś1 K1 साधु; B0 शुद्धं (for स्वादु). B7 गंधिम्; G1 गंगाम् (for गाङ्गम्). B8 (marg.) पातु काम इवोदकं. — c) K6 प्रविलापनम्; B1 सद्विलापनम् (for मद्वि°). K1 एतं तु; K7 D4. 6. 9 एत्रं तु; B8 (marg.) एतत्ते; M5 एतद्धि (for °त्तु). — d) G1 प्रतिबोधो (for °बुद्धो). K1 [ऽ]सि. Ś1 K2. 4 संत्यजे; K7 संप्रति; Da4 संत्यज्य (for °ज).

29 a) T1 M1 इमां (for इमं). Ś1 (*sup. lin.*) K2. 4 देवं; D2 देहे (for देहं). — G1 om. (? hapl.) 29b–31a. — b) D4 सूत- (for भूत-). Da4 T1 G3. 6 -ग्रामं (for -ग्रामः). — c) K1. 2 मयान्वितो; T2 M7 स याचि(M7 °त्यु)तो; Cv मयार्थितो (for स यात्वितो). K2. 4 मया कामं (for यथाकामं). — d) K6 च (for वा).

30 G1 om. 30 (cf. v. l. 29). — a) K7 D4. 6. 9 हि युष्मासु; B8 (marg.) M1. 6. 7 युष्मासु हि; D7 T G2. 3. 6 M6 च युष्मासु (for युष्मास्विह). Da3. a4 प्रीतं; G2 प्रीतिं (for प्रीतिः). — 30b is damaged in B7. — c) K4 सर्वं *; K6. 7 B0. 6–8 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 कामान्वै; B9 कामार्थः; D4. 6. 9 सर्वार्थान्; D7 सर्वास्त्वं; M6 सर्वार्थं (for सर्वान्वः). — d) K1 शास्यम्; V1 B0. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 5. 7 T2 M1. 5–7 Cn सत्त्वम्; Cnp वनम् (for सत्यम्).

31 G1 om. 31a (cf. v. l. 29). — a) K4 -भूतान्यते; D4 °न्यहे (for °न्यहं). — b) Da4 D4 वा (for च). K6 पश्यात्मानमिवात्मनः. — c) K1 सत्यं (for सत्त्वं). ❀ Cn : श्रुते श्रवणादौ सत्त्वमेकाग्रचित्तम् । ❀ — d) K2. 4 G1 धारयेत् (for °यन्).

32 a) K7 D4. 7. 9 T2 G1–3. 6 M7 विचरिष्यामि; T1 धारयि° (for विहरि°). M7 (*sup. lin.*) अनावर्तः (for °सक्तः). — b) D7 T2 सुख- (for सुखी). M6 लोके (for लोकान्). G1 अनामयान्; M7 निरामयं. — c) K1. 4. 6 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 मां (for मा). Ś1 K1. 2 [ए]व; V1 [इ]मं (for [ए]वं). D7 T G1–3. 6 M1. 5–7 यथा पुनर्न मामेवं (G1 °व). — d) K1 D4 प्रणिधास्यति.

33 a) D8 इमे (for हि मे). Da3 प्रपन्नस्य; Cp प्रणुन्नस्य (as in text). — b) D8 गतिज्वान्या (for °रन्या). M5 दृश्यते (for विद्यते). — c) Da4 दृष्टाशोक- (for तृष्णा°). — d) Da4 Ds2 D7 कामः. K1 प्रभवा; K6 प्रसवः.

34 a) K6 B6. 7 Dn1. n4 Ds D2–9 T G1–3. 6 M5 धननाशे (for °नाशो). K4 [ऽ]धिके. — b) K6 G1 मन्ये सर्वं; D7 T G3. 6 मन्यसे दुर्- (T1 त्वं; T2 सु-) (for मन्ये सर्व-). — d) T1 [इ]व (for च). K6. 7 Da3 Dn1. n4 Ds2 D2. 3. 5. 7. 8 T G1–3. 6 M1. 5. 7 धनाच्युतं; V1 ततो व्रजेत् (for धनच्युतम्).

35 a) Da4 अवज्ञात-; M1 अविज्ञान-; Cp.s अव° (as in text). D6 -सहस्रेषु; T2 °स्रैश्च; G3. 6 °स्रैस्तैर्; Cp.s °स्रैस्तु (as in text). — b) K4 दोष- (for दोषाः). K1 कष्टतरा; Cp.s °तरा (as in text). Da4

C. 12. 6620
B. 12. 177. 35
K. 12. 176. 35

अवज्ञानसहस्रैस्तु दोषाः कष्टतराधने ।
धने सुखकला या च सापि दुःखैर्विधीयते ॥ ३५
धनमस्येति पुरुषं पुरा निघ्नन्ति दस्यवः ।
क्लिश्यन्ति विविधैर्दण्डैर्नित्यमुद्वेजयन्ति च ॥ ३६
मन्दलोलुपता दुःखमिति बुद्धं चिरान्मया ।
यद्यदालम्बसे काम तत्तदेवानुरुध्यसे ॥ ३७
अतत्त्वज्ञोऽसि बालश्च दुस्तोषोऽपूरणोऽनलः ।
नैव त्वं वेत्थ सुलभं नैव त्वं वेत्थ दुर्लभम् ॥ ३८
पातालमिव दुष्पूरो मां दुःखैर्योक्तुमिच्छसि ।
नाहमद्य समावेष्टुं शक्यः काम पुनस्त्वया ॥ ३९
निर्वेदमहमासाद्य द्रव्यनाशाद्यदृच्छया ।
निर्वृतिं परमां प्राप्य नाद्य कामान्विचिन्तये ॥ ४०
अतिक्लेशान्सहामीह नाहं बुध्याम्यबुद्धिमान् ।
निकृतो धननाशेन शये सर्वाङ्गविज्वरः ॥ ४१
परित्यजामि काम त्वां हित्वा सर्वमनोगतीः ।
न त्वं मया पुनः काम नस्योतेनेव रंस्यसे ॥ ४२

---

T G1-3. 6 दोषः कष्टतरोधने. ❀ Cn : अधने इति छेदः । सन्धिरार्षः । ❀ —c) B6 धन्वेष्वथ; Cs धने सुख- (as in text). K1 यां च; K4. 8 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 या तु; M6 कापि; Cs -लेशः (for या च). —d) K7 D4-6. 8. 9 सा च; D7 T G1-3. 6 M7 सा हि; Ca सापि (as in text). K6 V1 Bo. 6-9 Da4 D3. 5 दुःखे (for दुःखैर्). K2 सा दुःखैरपि धीयते. ❀ Ca : विधीयते विशेषतो धीयते । ❀

36 a) V1 अस्तीति; D7 T G2 अभ्येति (for अस्येति). D4 reads from पुरुषं up to मिति (in 37b) twice. —b) K4. 6 Bo. 6-9 Da3 Dn1. n4 Ds D2. 3. 5. 7. 8 T G1-3. 6 M1. 5. 6 Cp पुरो (for पुरा). T2 निंदंति (for निघ्नन्ति). B3 (marg.) Da4 T2 G1. 3. 6 M1. 5-7 शत्रवः; D7 T1 G2 लुब्धकाः (for दस्यवः). ❀ Cp : पुरो धनाधिगमादनन्तरमेव । ❀ —c) B3 (marg.) D4 (both time). 6. 9 क्लिश्नंति; D7 T1 G2. 3. 6 राजानो (for क्लिश्यन्ति). —d) K2 नित्यमुद्वेजयन्निव.

37 a) K6. 7 B8 (marg. as in text) Da3. a4 D3. 5 अर्थ-; B9 संदि-; D2 अर्थे; D7 T1 G2. 3. 6 धन-; G1 मद-; Ca मन्द- (as in text). T2 M1. 6 -लोलुपतां. —b) D7 G2 इति दुःखं; T2 G1 इति बुद्धिं; M1. 5-7 प्रतिबुद्धं (for इति बुद्धं). B8 (marg. as in text) मम (for मया). —c) Ś1 K1. 2 D4. 9 आलंबते; B7 आलक्षसे. Ś1 K1. 2 D4. 6 कामस्; K7 Da3 Dn4 Ds D2. 9 G1. 2 M1. 5. 6 कामं; D7 T1 G3. 6 मंद (for काम). —d) G1 तं (for तत्). K2 G1 तथैव (for तदेव). Ś1 K1. 2. 4 V1 D4. 6. 9 [अ]नुरुध्येते; B8 [अ]वरुध्यसे (for [अ]नु°).

38 a) K1 अतत्त्वयोसि; D4 M7 अतत्र(M7 °र्थे)-ज्ञोसि; D7 T1 G3. 6 अतस्त्वज्ञोसि- (for अतत्त्वज्ञोऽसि). Dn1 बालस्त्वं; D4. 9 बालस्यं (D9 °स्यं). G1 मालश्च; M1. 7 बाल स्वं (for °लश्च). G2 अतस्त्वज्ञोतिबालश्च. —b) K7 D4. 9 [ऽ]पूरणा (for °रणो). B6 [ऽ]लसः; B8 (marg.) [ऽ]मलः (for ऽनलः). G1 दुर्दोषो पूरणे न च. ❀ Cn : अनलोऽग्निरिवेत्यर्थः ॥ Cp : [न] अल्यते धार्यते । न विद्यते अलमस्येति वा । ❀ —B6 reads 38c on marg. *sec. m.*

39 a) K4. 6 Da3. a4 Dn1. n4 Ds D3-5. 7 G1 M1. 5. 6 पाताल; T G2. 3. 6. M7 पाताळ (for °लम्). —b) D5. 7 T1 मा (for मां). —c) K1 अस्य (for अद्य). —d) K2 शक्त्या; K7 Da4 शक्यं; D4 शक्या (for शक्यः). M7 कामः. Da4 G1 पुरस् (for पुनस्).

40 b) T2 G1 दम्यनाशाद्; G3 द्रव्यादानाद् (for द्रव्यनाशाद्). —c) K1. 4. 7 V1 Bo. 6. 8 (marg.) Da3 Dn1. n4 Ds D2. 3. 5-9 T1 G1 निवृत्तिं; K2. 6 Da4 T2 निर्वृत्तिं (for °तिं). Dn1 प्राप्तं (for प्राप्य). —d) K2. 4 विचिंतयेत्; T2 विचारये.

41 a) Ds1 D7 T G1-3. 6 M1. 5-7 अतिक्लेशं (for °क्लेशान्). V1 सहानीह (for सहामीह). —b) Ś1 K1. 2 नाहं बुद्ध्या(Ś1 °द्धा)पि; K7 D4. 6. 7. 9 न बुध्येहम् (for नाहं बुध्यामि). —c) D7 T1 G1-3. 6 Csp निकृष्टो; T2 निष्कृष्टो; Ca निकृतो (as in text). Da4 धननाशेव. —d) Ś1 (orig.) सोयं; Ś1 (*sup. lin.*) K2 सोहं; Bo स वै (for शये).

42 a) D7 T G1-3. 6 M1. 5-7 प्रतिनृ(T2 °कृ-; G2 °रु)त्यामि; D8 प्रतित्यजामि (for परि°). Da3. a4 कामं (for काम). Da4 G1 M6 स्वा. —b) V1 त्यक्त्वा (for हित्वा). V1 D7 T G1-3. 6 सर्वं (for सर्व-). V1 Da4 Dn4 D7 T G1-3. 6 M1. 5. 7 -मनोगतं (Da4 °तिः; Dn4 °ताः); Ca °गतीः (as in text). —c) M6 स्वा (for स्वं). D7 T G1-3. 6 M6. 7 transp. मया and पुनः. M6 मात (for काम). —d) K1 तस्योतेनेव; K2 **तेनेव; K4. 6 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2.

क्षमिष्येऽक्षममाणानां न हिंसिष्ये च हिंसितः ।
द्वेष्यमुक्तः प्रियं वक्ष्याम्यनादृत्य तदप्रियम् ॥ ४३
तृप्तः स्वस्थेन्द्रियो नित्यं यथालब्धेन वर्तयन् ।
न सकामं करिष्यामि त्वामहं शत्रुमात्मनः ॥ ४४
निर्वेदं निर्वृतिं तृप्तिं शान्तिं सत्यं दमं क्षमाम् ।
सर्वभूतदयां चैव विद्धि मां शरणागतम् ॥ ४५
तस्मात्कामश्च लोभश्च तृष्णा कार्पण्यमेव च ।
त्यजन्तु मां प्रतिष्ठन्तं सत्त्वस्थो ह्यस्मि सांप्रतम् ॥ ४६

प्रहाय कामं लोभं च क्रोधं पारुष्यमेव च ।
नाद्य लोभवशं प्राप्तो दुःखं प्राप्स्याम्यनात्मवान् ॥ ४७
यद्यत्त्यजति कामानां तत्सुखस्याभिपूर्यते ।
कामस्य वशगो नित्यं दुःखमेव प्रपद्यते ॥ ४८
कामान्व्युदस्य धुनुते यत्किंचित्पुरुषो रजः ।
कामक्रोधोद्भवं दुःखमह्रीररतिरेव च ॥ ४९
एष ब्रह्मप्रविष्टोऽहं ग्रीष्मे शीतमिव ह्रदम् ।
शाम्यामि परिनिर्वामि सुखमासे च केवलम् ॥ ५०

C. 12. 6635
B. 12. 177. 50
K. 12. 176. 50

---

8. 5 वत्स्यसे न च; K7 D4. 6–9 कस्यचिदपि; V1 मस्यते नैव; T1 G1. 3 M7 नस्योतेनैव; G2 नस्योत इव; Cap प्रक्रीडनेनेव (for नस्योतेनेव). B9 Da4 D4 रस्यसे; T2 रंस्यते; G1 रंयसे (for रंस्यसे).

43 43$^{a}$ is damaged in B7. — $^{a}$) K2 क्षमिष्ये (for °ष्ये). B8. 9 Da3. a4 Dn1. n4 D8 D2. 3. 5 [ऽ]क्षिप- (Da4 °ष्य-; D5 °ष्य)माणानां (for ऽक्षम°). — $^{b}$) D4 अहिंसिष्ये. K6. 7 Bo. 7 Da3 Dn1. n4 D5 D2. 3. 5. 7. 8 T G1–3. 6 M1. 5–7 विहिंसितः (K7 °तां; Da3 °तुः); Da4 च हिंसितुः; D4. 6. 9 च हिंसतां (D6 °तः) (for च हिंसितः). — $^{cd}$) K1 G3. 6 द्वेषमुक्तः; K4. 6 B9 Dn4 D2. 3. 5. 6. 8 द्वेष्य(K6 °ष)युक्तः; Da3. a4 द्वेष्यत्यक्तः; T2 द्वेष्ये मुक्तः (for द्वेष्यमुक्तः). B9 Da3 Dn4 D8 वक्ष्यामि; Da4 रक्ष्यामि (for व°). — $^{d}$) D5 om. from त्य up to वर्तयन् (in 44$^{b}$). G2 अनादृत्य (for °दृत्य). V1 M1. 5–7 तव प्रियं (M7 °यः); B7 तदा-प्रियं.

44 D5 om. 44$^{ab}$ (cf. v. l. 43). — $^{a}$) Da3. a4 T2 G2 M7 तृप्त- (for तृप्तः). — $^{b}$) K1 वर्तनं (for °यन्). — $^{d}$) Ś1 K1. 2 काम त्वां (for त्वामहं).

45 $^{a}$) Da4 सर्वेदं (for नि°). K1 D4 निर्वृति-; K6 निवृतिं; Da4 D3 निर्वृत्तिं (for °तिं). K7 प्राप्तिं (for तृप्तिं). — $^{b}$) K1 शांति-; M6. 7 (*inf. lin.* as in text) क्षांतिं (for शान्तिं). Dn4 M1. 7 क्षमां दमं (by transp.); D8 शमं क्षमां; D4 दमक्षमां; D6 M5. 6 दमं क्षमं. — $^{c}$) D3 सत्यं (for सर्व-). K7 D4. 9 सिद्धिं (for चैव). — $^{d}$) K6 Bo. 6–9 Da3. a4 Dn1. n4 D5 D2. 3. 5 समुपागतं; K7 V1 D4. 7. 9 T G2 शरणं गतं (D4 °ते) (for °णागतम्).

46 46$^{ab}$ is damaged in B7. — $^{a}$) K2. 4 स (for the first च). — $^{c}$) Ś1 K2 Da4 मा (for मां). K6 B7–9 D8 M1. 6. 7 प्रतिष्ठंतु (M1. 7 °तां; M6 °तुं) (for °ष्ठन्तं). D7 G2. 3 त्यजत प्रतितिष्ठंतं; T1 त्यजंतु प्रतितिष्ठंतु. — $^{d}$) Da4 सत्त्वं स्थो. G1 [ऽ]स्मीह (for ह्यस्मि). D4 संप्रति (for सांप्रतम्).

47 B8. 9 om. 47$^{ab}$. Da4 M6 read 47$^{ab}$ twice. — $^{a}$) G2 प्रसाय (for प्रहाय). V1 लोभं कामं (by transp.); D5 कामं लाभं; G1. 3. 6 कामं क्रोधं; M1 कामलोभं. M6 (second time) प्रजह्न्कामलोभौ च. — $^{b}$) G1. 3. 6 लोभं (for क्रोधं). K6. 7 V1 Bo. 6. 7 Da3. a4 Dn1. n4 D5 D2–6. 8. 9 M6 (second time) सुखं (M6 सर्वं) प्राप्तोस्मि सांप्रतं (K7 D4–6. 8. 9 M6 केवलं). — $^{c}$) D7 T1 G2 नाहं (for नाद्य). K6 -पथं; G2 -वनं (for -वशं).

48 $^{a}$) Da3 Dn4 यस् (for the second यत्). — $^{b}$) K2 तत्तत्स्वस्य (for तत्सुखस्य). Da3 Ds1 [अ]ति-; Da4 [अ]पि (for [अ]भि-). M6 -पूर्वते (for -पूर्यते). — $^{c}$) Da4 कामश्च. — $^{d}$) K1. 2 कामम् (for दुःखम्). B7 damaged from प्रप up to किंचित्पु (in 49$^{b}$). V1 प्रवर्तते (for प्रपद्यते).

49 With 49, cf. 5. 42. 10. B7 damaged up to किंचित्पु. — $^{a}$) K6. 7 V1 Bo. 6. 8. 9 Da3. a4 Dn1. n4 D5 D2–6. 8. 9 कामानुबंधं; D7 T G1–3. 6 M5–7 कामा-नपोह्य (for °न्व्युदस्य). K1. 2. 4 V1 धुनते; K6 Bo. 6 Da3 Dn1. n4 D5 D2. 3. 5. 8 नुदते; Da4 धनुते (for धुनुते). — $^{c}$) K7 D4. 6. 7. 9 T G2. 3. 6 M6 -क्रोधभवं (G3. 6 °यं) (for -क्रोधोद्भवं). — $^{d}$) B8 (marg. as in text) Da3. a4 अक्लीबरतिर्; D7 क्रोधो ह्यरतिर्; T1 G2 लोभो ह्यरतिर्; G3. 6 लोभह्रीरतिर् (for अह्रीररतिर्).

50 $^{a}$) D7. 8 एवं (for एष). Ś1 K1. 2. 4 Da3 Dn1. n4 D2. 3. 8 -प्रतिष्ठो (for -प्रविष्टो). — $^{b}$) B8 (marg. as in text) द्रुमं; M7 प्रदः (for ह्रदम्).

C. 12. 6636
B. 12. 177. 51
K. 12. 176. 50

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ ५१
आत्मना सप्तमं कामं हत्वा शत्रुमिवोत्तमम् ।
प्राप्यावध्यं ब्रह्मपुरं राजेव स्यामहं सुखी ॥ ५२
एतां बुद्धिं समास्थाय मङ्किर्निर्वेदमागतः ।
सर्वान्कामान्परित्यज्य प्राप्य ब्रह्म महत्सुखम् ॥ ५३
दम्यनाशकृते मङ्किरमरत्वं किलागमत् ।
अच्छिनत्काममूलं स तेन प्राप महत्सुखम् ॥ ५४
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गीतं विदेहराजेन जनकेन प्रशाम्यता ॥ ५५

— $^{e}$) G3. 6 शम्यामि. ❀ Ca: परिनिर्वामि, परि सर्वतो विषयेभ्यो निष्क्रम्य वामि यामि । वाधातोर्गत्यर्थत्वात् । ❀ — $^{d}$) K6 B0. 6 Da3. a4 Ds1 D8 सुखं मामेति; K7 सुखमामेव; V1 D5. 6 सुखं मासे च; B7–9 सुखमस्मि च; Ds2 सुखं मासेति; D2 सुखं मासेन; D3 सुखं मासेव; D7 सुखं मामेव; G3. 6 सुखमास्ते च (for °मासे च).

51 = 12. 168. 36; B. 12. 276. 6. Vāyu P. II. 31. 100. Quoted in Śaṁkara's Bhāṣya on Bṛ. Up. 4. 3. 33; in Yogasūtrabhāṣya on 2. 42. — $^{a}$) K1. 4 यश्च. K1 D9 कामं (for काम-). Da3 लोकं (for लोके). — $^{b}$) K1 यश्च. Da4 दिव्य- (for दिव्यं). — $^{c}$) K7 V1 B6 D4. 6. 9 M7 -सुखस्यैतत्; D7 T1 G2. 3. 6 M1 °स्येमे (for °स्यैते). — $^{d}$) B7 damaged from तः up to प्राप्याव (in $52^{c}$). K4 नार्घतः; K6 नार्हति. Da4 शोडशी. T2 कळां. K7 V1 B6 (marg. as in text) D4. 6. 9 M7 कलां नार्ह(D4 °र्हं)ति षोडशीं.

52 B7 damaged up to प्राप्याव. — $^{a}$) Ś1 (by corr.) K1. 2 मानसं; K6 सहजं (for सप्तमं). — $^{b}$) Ś1 K1. 2. 4 Da3. a4 D4. 9 Ca हित्वा; G1 गत्वा (for हत्वा). Da4 [उ]त्तमः. ❀ Ca: आत्मना सप्तम इति कामादिषड्रुपहितमात्मानं त्यक्त्वा केवलमात्मानमवस्थाप्य, आत्मनः सप्तममात्मादिप्रकृतिषट्कोपहितं हित्वेवेत्युपपन्नार्थः पाठः ॥ Cn: आत्मना स्थूलदेहेन सह गणनायां सप्तमः कामः । तथाहि । अन्नमयप्राणमयमनोमयविज्ञानमयाश्चत्वारः कोशाः प्रवृत्तिमत्त्वाद्रजःप्रधानाः । आनन्दमय आवरणरूपत्वात्तमःप्रधानः पञ्चमः । ततः शुद्धसत्त्वप्राधान्यात्सबीजसमाधिरानन्दाख्यः षष्ठः । तस्यापि मूलमस्मीति प्रत्ययमात्रशरीरो महत्तत्त्वाख्यः सर्वानर्थबीजभूतश्चरमः कामः सप्तमः । ❀ — $^{c}$) Ś1 K1 B8. 9 Da3 D4–6. 8 प्राप्यावं(D8 °बं)ध्यं; K7 प्राप्य वधं; D7 G2 प्राप्यावश्यं; D9 °वेध्यं (for °वध्यं). G1 बहुपुरं (for ब्रह्मपुरं). — $^{d}$) B6 ब्रह्मैव (for राजेव). B6 (marg.). 8 Da3. a4 राज्ये (Da3. a4 °जे) वत्स्याम(Da3. a4 °स्य)हं सुखी. K4 सुखं (for सुखी). Ś1 K1. 2 राजेवासा(K2 °स्या)म्यहं सुखं; K6 राजवश्यामहं सुखी; K7 D4. 6. 7. 9 T G1–3. 6 M1. 5–7 राजे(D7 तत्रै)व च (G1 हि) वसाम्यहं.

53 $^{b}$) K6 आत्मनः (for आगतः). D7 मंकिर्निर्वेदतां गतः. — $^{d}$) K6. 7 V1 B8. 9 Da3 D4. 9 G1 M1. 5–7 प्राप; Da4 D6 प्राय; T2 प्राप्त- (for प्राप्य).

54 K6 om. (hapl.) 54. — $^{a}$) K2 दृश्ये (for दम्य-). K1 D6 G1 -नाशे कृते; K2 नाशक्यते (for -नाशकृते). T2 मंकीर्. — $^{b}$) K4. 7 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2–9 अमृतत्वं; T G1. 3. 6 अमलत्वं; Cap अमूढत्वं; Ca अमरत्वं (as in text). K2. 4 किलाप्तवान् (for °गमत्). — $^{c}$) K2. 7 D4. 6. 9 अनिच्छन्; K4 अतिष्ठत् (for अच्छिनत्). D7 T1 G2. 3. 6 निर्वृतिं परमां (G2 °मं) प्राप्य. — $^{d}$) D7 T1 G3. 6 मंकिः (for तेन). K2 Da4 Ds2 T2 प्राप्य (for प्राप). V1 B0. 6. 7. 8 (marg. as in text). 9 Da3 (also as in text). a4 D6. 9 T G1–3. 6 M1. 5–7 परां गतिं (for महत्सुखम्). — After 54, K6 B9 Dn1. n4 D8 ins. an addl. colophon [*Sub-parvan:* K6 B9 Dn1. n4 D8 मोक्षधर्म. — *Adhy. name:* K6 B9 Dn1. n4 D8 मंकिगीता. — *Adhy. no.* (figures words or both): D3 3. — *Śloka no.:* Dn1 54; Dn4 53; D8 55]. — After 54, the sequence in G2 is: $55^{ab}$; $57^{ab}$; $55^{cd}$; 56; $55^{ab}$ (r); $57^{ab}$ (r).

55 For the sequence in G2, cf. v. l. 54. Before 55, Ś1 K1. 2. 4. 6. 7 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2–9 ins. भीष्म उवाच. T1 G3. 6 repeat $55^{ab}$ after 56. $55^{ab}$ is partly damaged in B7. — $^{b}$) M7 इतिहासः. D4. 6. 9 M1 श्लोकं मोक्षोपसंहितं. — For $55^{ab}$, T2 subst.:

474* अस्मिन्नर्थे पुरा गीतं श्णु राजन्महात्मना ।

— D7 om. $55^{c}$–$56^{d}$. — $^{c}$) T2 श्लोकं (for गीतं). G1 जनक- (for विदेह-). — $^{d}$) B6 (marg.) जनकेनेह (for °केन प्र-). D4 प्रशाम्यत.

56 = 12. 17. 18; B. 12. 219. 50; (var.) B. 12. 276. 4. Cf. Jātaka 339, gāthā 125; Dhammapada 200; Uttarādhyayana S. 9. 14. For the sequence in G2, cf. v. l. 54. D7 om. 56 (cf. v. l.

अनन्तं बत मे वित्तं यस्य मे नास्ति किंचन ।
मिथिलायां प्रदीप्तायां न मे दह्यति किंचन ॥ ५६
अत्रैवोदाहरन्तीमं बोध्यस्य पदसंचयम् ।
निर्वेदं प्रति विन्यस्तं प्रतिबोध युधिष्ठिर ॥ ५७
बोध्यं दान्तमृषिं राजा नहुषः पर्यपृच्छत ।
निर्वेदाच्छान्तिमापन्नं शान्तं प्रज्ञानतर्पितम् ॥ ५८
उपदेशं महाप्राज्ञ शमस्योपदिशस्व मे ।
कां बुद्धिं समनुध्याय शान्तश्चरसि निर्वृतः ॥ ५९

बोध्य उवाच ।

उपदेशेन वर्ताभि नानुशास्मीह कंचन ।
लक्षणं तस्य वक्ष्येऽहं तत्स्वयं प्रविमृश्यताम् ॥ ६०
पिङ्गला कुररः सर्पः सारङ्गान्वेषणं वने ।
इषुकारः कुमारी च षडेते गुरवो मम ॥ ६१

C. 12. 6646
B. 12. 178. 7
K. 12. 176. 61

इति श्रीमहाभारते शान्तिपर्वणि एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

---

55). — [a]) $Da_{3}$. $a_{4}$ $Dn_{4}$ इव (for बत). $K_{1}$ चित्तं (for वित्तं). — [c]) $D_{5}$ प्रदग्धायां (for प्रदीप्तायां). — [d]) $G_{1}$ दहति; $G_{2}$ दह्यत. — After 56, $T_{1}$ $G_{3.6}$ repeat 55[ab].

57 For the sequence in $G_{2}$, cf. v. l. 54. — [a]) $D_{4.6.9}$ अत्रापि (for अत्रैव). $D_{7}$ $T_{1}$ $G_{2}$ (both times) नहुषस्यापि राजर्षेः. — [b]) $K_{1.2.4}$ $D_{7}$ $G_{2}$ (first time) बोधस्य; $G_{1}$ बौद्धस्य; $G_{2}$ (second time) बोद्धस्य (for बोध्यस्य). $K_{6}$ इतिहासं पुरातनं. — [c]) $Da_{4}$ विध्यस्तं; $D_{7}$ $T_{1}$ $G_{1.2}$ संन्यस्तं (for वि°). — [d]) $Ś_{1}$ $K_{1.2}$ तं निबोध (for प्रतिबोध).

58 $B_{7}$ partly damaged. — [a]) $G_{1}$ बोध्यः. $K_{4.6}$ $B_{8}$ (marg.) $Dn_{1}$. $n_{4}$ $D_{5}$ $D_{2.3.5.7.3}$ T $G_{1-3.6}$ शांतम् (for दान्तम्). $B_{7}$ ऋषे. — [b]) $Ds_{2}$ $D_{3.8}$ नाहुषः; $D_{6}$ नघुषः. $G_{1}$ परिपृच्छत. — [d]) $K_{4.6.7}$ $V_{1}$ $Bo._{6-9}$ $Da_{3}$. $a_{4}$ $Dn_{1}$. $n_{4}$ $D_{5}$ $D_{2.3.5.8.9}$ $T_{2}$ $G_{1}$ शास्त्र-; $D_{4}$ $G_{3.6}$ शांति-; $D_{6}$ शांत- (for शान्तं). $D_{6}$ -विज्ञान- (for प्रज्ञान-). $M_{1.6}$ -कल्पितं (for -तर्पितम्).

59 [a]) $T_{2}$ महाप्राज्ञः. — [b]) $K_{7}$ शमश्च; $V_{1}$ समस्य; $G_{2}$ शमो हि (for शमस्य). $K_{7}$ $M_{1.6}$ [उ]पदिशस्य ($K_{7}$ °श्च); $D_{7}$ $G_{2}$ [उ]पादिशस्व (for [उ]प°). — [c]) $D_{7}$ T $G_{1-3.6}$ $M_{1.5-7}$ विद्यां (for बुद्धिं). $Ś_{1}$ $K_{1.2}$ समनुध्यायन्; $K_{7}$ $D_{4.6.9}$ समुप($K_{7}$ °पा)स्थाय; $V_{1}$ समनुज्ञाय; $Da_{4}$ समनुप्राप; $D_{7}$ T $G_{1-3.6}$ $M_{1.5-7}$ स($D_{7}$ स्व)मनुप्राप्य (for °ध्याय). — [d]) $K_{4}$ शांतिश्च; T $G_{1-3.6}$ $M_{7}$ छन्नश्च (for शान्तश्च). $K_{7}$ $D_{4.9}$ चरति (for °सि). $D_{7}$ छिन्नश्चासि निवृत्तयः.

60 [b]) $D_{7}$ T $G_{1-3.6}$ $M_{1}$ नानुशास्ति (for °शास्मि). $K_{2}$ $D_{5}$ $D_{6}$ $M_{1.6}$ किंचन; $D_{7}$ T $G_{1-3.6}$ $M_{5}$ कश्चन (for कंचन). — [c]) $V_{1}$ $Dn_{4}$ वक्ष्येयं; $Da_{4}$ चक्ष्येहं; $T_{2}$ वक्षेहं. ❀ Cv: लक्षणं तस्य वक्ष्येऽहम् इत्यत्र ... लक्षणं ज्ञापकं वस्तु, उपदेशकर्तॄन्गुरूनिति यावत् । ❀ — [d]) $Ś_{1}$ $K_{1.2.4.7}$ प्रविमृष्यतां; $K_{6}$ $V_{1}$ $Bo._{7-9}$ $Da_{3}$. $a_{4}$ $Dn_{1}$. $n_{4}$ $D_{3}$ परिमृष्य($B_{7}$ $Dn_{4}$ $D_{3}$ °श्य)तां; $B_{6}$ $D_{5}$ $D_{2.5-8}$ $M_{5}$ परिमृश्यतां (for प्रवि°).

61 [a]) $T_{1}$ $G_{1.2}$ पिंगळा. $D_{6}$ कुरुरः. — [b]) $K_{4.7}$ $G_{1}$ सारंगा($K_{7}$ °गो)न्वेषणे ($K_{7}$ °णं; $G_{1}$ °णो); $K_{6}$ $B_{6-9}$ $Da_{3}$. $a_{4}$ शारंगान्वेषणं. $K_{4}$ मम; $D_{5}$ च मे (for वने). ❀ Ca: अस्य इदं तात्पर्यम् । पिङ्गलाया उपजीव्यम् । कुररादामिषत्यागे सुखम् । सर्पाद्गृहाद्यनवष्टम्भः । सारङ्गो हरिणस्तदर्थे मृत्योर्निर्वेदसुखम्, सारङ्गानामिव भूताद्रोहेन जीवनं वा । इषुकारादेकचित्तता । कुमारीशब्देन तद्भूषणशङ्खानां बहूनां नाशे एकस्य शङ्खस्य कोलाहलनाशादेकाकिन उपजीवनमिति ॥ Cs: पिङ्गला नाम नैराश्येन गुरुः । कुररः आमिषत्यागेन गुरुः । अनिकेतनत्वेन सर्पः । सारं प्रति गच्छन्तीति सारङ्गा भ्रमराः । तेषां प्रतिपुष्पं मकरन्दान्वेषणे सर्वशास्त्रेभ्यः सारग्रहे गुरुः । इषुकारश्चित्तैकाग्र्ये । कुमारी स्वशङ्खरीवलयप्रकोष्ठान्बाह्ववघाते क्रियमाणे शङ्खानामितरेतरसंघर्षरवेण वराविषयिणीं वार्तां श्रोतुमनुत्साहमाना वलयमेकैकमभिनत् । सा मम एकाकितायां गुरुः । तदाह वररुचिः । आशा हि ... सुखमेधते = (var. 475*, lines 1–6). अल्पेभ्यश्च महद्भ्यश्च शास्त्रेभ्यो मतिमान्नरः । सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः ॥ इषुकारो ... यथा = (var. 475*, lines 9–12) ॥ Cn: काचित्कुमारी पित्रादिपरवशा गृहागतानतिथीन्प्रच्छन्नं भोजयितुमिच्छन्ती व्रीहीनवहन्तुं प्रचक्रमे । तस्याः प्रकोष्ठस्थाः शङ्खाश्चुक्रुशुः । सा परेषां सूचना मा भूदिति शङ्खान्भङ्क्त्वा एकैकमवशेषितवती । ❀ — After 61, $K_{1}$ $Bo._{6-8}$ $Da_{3}$. $a_{4}$ $D_{5}$ $D_{2-5.9}$ ins. an addl. colophon [ *Sub-parvan:* $K_{1}$ $Bo._{6-8}$ $Da_{3}$ $D_{2-5.9}$ मोक्षधर्म. — *Adhy. name:* $K_{1}$ $Bo._{6-8}$ $Da_{3}$ $D_{2-5.9}$

# १७२

C. 12. 6653
B. 12. 179. 1
K. 12. 177. 1

युधिष्ठिर उवाच ।
केन वृत्तेन वृत्तज्ञ वीतशोकश्चरेन्महीम् ।
किं च कुर्वन्नरो लोके प्राप्नोति परमां गतिम् ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्रादस्य च संवादं मुनेराजगरस्य च ॥ २
चरन्तं ब्राह्मणं कंचित्कल्यचित्तमनामयम् ।
पप्रच्छ राजन्प्रह्रादो बुद्धिमान्प्राज्ञसंमतः ॥ ३
स्वस्थः शक्तो मृदुर्दान्तो निर्विवित्सोऽनसूयकः ।
सुवाग्बहुमतो लोके प्राज्ञश्चरसि बालवत् ॥ ४

---

संकिगीता ]. On the other hand, K4. 6. 7 V1 B0. 6–9 Da3. a4 Dn1. n4 D2. 3. 5–8 ins. after 61:

भीष्म उवाच ।
475* आशा बलवती कष्टा नैराश्यं परमं सुखम् ।
आशां निराशां कृत्वा तु सुखं स्वपिति पिङ्गला ।
सामिषं कुररं दृष्ट्वा वध्यमानं निरामिषैः ।
आमिषस्य परित्यागात्कुररः सुखमेधते ।
गृहारम्भो हि दुःखाय न सुखाय कदाचन । [5]
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ।
सुखं जीवन्ति मुनयो भैक्ष्यवृत्तिं समाश्रिताः ।
अद्रोहेणैव भूतानां सारङ्गा इव पक्षिणः ।
इषुकारो नरः कश्चिदिषावाहितमानसः ।
समीपेनापि गच्छन्तं राजानं नावबुद्धवान् । [10]
बहूनां कलहो नित्यं द्वयोः संघर्षणं ध्रुवम् ।
एकाकी विचरिष्यामि कुमारीशङ्खको यथा ।

[ K6. 7 V1 Dn1 D7. 8 om. the ref. B0. 6–9 Da3. a4 D2. 3. 5. 6 बोध्य (for भीष्म). With lines 1–2, cf. 12. 168. 52; Bhāgavata 11. 8. 43; Jātaka 330, gāthā 2. —(L. 1) K4 Dn1 राजन्; D2. 3. 5. 6. 8 कष्टं (for कष्टा). C8 आशा हि परमं दुःखं (for the prior half). Da4 दौराज्यं (for नैराश्यं). — Lines 2–3 = (var.) Sāṃkhyapravacanabhāṣya IV. 5. —(L. 2) K4 निराशं; K6 Da4 निराशा; B6 अनाशां. C8 हि (for तु). —(L. 3) C8 बाध्यमानं (for वध्यमानं). B6 (marg. as in text) निरामिषः. —(L. 4) Da4 परित्यागान्. C8 तदामिषं परित्यज्य (for the prior half). — With lines 5–6, cf. Bhāgavata 11. 9. 15. —(L. 7) K6 B0. 8. 9 Da3 भैक्ष- (for भैक्ष्य-). K7 समाश्रिताः (for °श्रिताः). —(L. 8) Dn4 अद्रोहेनैव. K4 Da3 Dn4 D2 सारंग; V1 शारंगा. —(L. 9) K4 Da3 Dn1. n4 D2. 3. 5. 6 आसक्त- (for आहित-). D7 इष्वारोपितमानसः; C8 इषौ हि गतमानसः (for the post. half). —(L. 10) C8 समीपमपि (for समीपेनापि). D7 नापि (for नाव-). —(L. 11) K4 कलहं. B6 D7 द्वाभ्यां; C8 [ऽ]वश्यं (for नित्यं). C8 द्वाभ्यां (for द्वयोः). Da4 संकर्षणं; Dn1 D2. 3 संकथनं; Dn4 संघर्शनं. C8 तथा (for ध्रुवम्). —(L. 12) K7 D7 विहरिष्यामि (for विच°). C8 एक एव चरेत्तस्मात्कुमार्या इव कङ्कणः. ]

Colophon om. in K4. 6 D2. 3. 5; K3. 5 B1–5 Da1. a2 Dn2. n3 D1 G4. 5 M2–4 absent. — *Sub-parvan:* Ś1 K1. 2. 7 V1 B0. 6–9 Dn1. n4 D8 D4. 6–9 T G1–3. 6 M1. 5–7 मोक्षधर्म. — *Adhy. name:* Ś1 K1. 2. 7 V1 D8 D4. 6. 7. 9 T2 G1. 2. 6 M1. 5–7 संकिगीता (K7 °तं); B0. 6–9 Da3. a4 Dn1 D8 बोध्यगीता. — *Adhy. no.* (figures, words or both): Dn1. n4 5; D8 D7. 8 T1 G1. 3. 6 M1. 5–7 4; T2 G2 18.

## 172

1 a) K7 D6. 9 वृत्तज्ञो; D4 °ज्ञा; G6 °ज्ञे (for °ज्ञ). — 1b is damaged in K1. — b) Ś1 K2. 4 केन (Ś1 [before corr.] कथं) वा सुखमश्नुते. — c) M4 किंचित् (for किं च). D4 नरा (for नरो). K7 किं कुर्वन्नरलोकेस्मिन्. — d) K6 V1 B0. 6–9 Dn1. n4 D8 D2. 3. 5. 8 प्राप्नोति गतिमुत्तमां (D81 D8 °मं).

2 c) Ś1 K1. 2 Da4 Dn4 D7. 8 T G1–3. 6 M1. 5–7 प्रह्लादस्य (for प्रह्रा°). K6 तु (for च). — d) V1 D2. 4. 7. 9 T G1. 3. 6 M1. 5–7 अजगरस्य (for आज°). K6 तु (for च).

3 a) V1 G2 M7 किंचित् (for कंचित्). — b) K1. 2. 4 B0. 7 Da3. a4 Dn1. n4 D8 D2. 3. 5. 6. 3 M5 Cn कल्पचित्तम्; K6 D7 C8 कल्पवि(D7 °वृ)त्तम्; K7 D9 स्वस्थ(D9 °च्छ)चित्तम्; B6 (marg. as in text) स्थिर°; D4 कल्पं चित्तम् (for कल्यचित्तम्). Dn4 D2 अनामनं (D2 °मगं); D8 अलामयं (for अना°). ❀ Cn: कल्पचित्तं दृढचित्तम् ॥ Cv: कल्पं समर्थं चित्तं यस्य सः । ❀ — c) K4. 6 V1 B0. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 5. 7. 8 G1 राजा (for राजन्). Ś1 K1. 2 Da4 Dn4 D2. 6. 7 T G1–3. 6 M1. 5–7 प्रह्लादो; K6 राजेन्द्र. — d) K6 प्रह्लादो

नैव प्रार्थयसे लाभं नालाभेष्वनुशोचसि ।
नित्यतृप्त इव ब्रह्मन्न किंचिदवमन्यसे ॥ ५
स्रोतसा ह्रियमाणासु प्रजास्वविमना इव ।
धर्मकामार्थकार्येषु कूटस्थ इव लक्ष्यसे ॥ ६
नानुतिष्ठसि धर्मार्थौ न कामे चापि वर्तसे ।
इन्द्रियार्थाननादृत्य मुक्तश्चरसि साक्षिवत् ॥ ७
का नु प्रज्ञा श्रुतं वा किं वृत्तिर्वा का नु ते मुने ।
क्षिप्रमाचक्ष्व मे ब्रह्मञ्श्रेयो यदिह मन्यसे ॥ ८
अनुयुक्तः स मेधावी लोकधर्मविधानवित् ।
उवाच श्लक्ष्णया वाचा प्रह्लादमनपार्थया ॥ ९
पश्यन्प्रह्लाद भूतानामुत्पत्तिमनिमित्ततः ।
ह्रासं वृद्धिं विनाशं च न प्रहृष्ये न च व्यथे ॥ १०
स्वभावादेव संदृश्य वर्तमानाः प्रवृत्तयः ।
स्वभावनिरताः सर्वाः परितप्ये न केनचित् ॥ ११

C. 12.6663
B. 11.179.11
K. 12.177.11

---

( for बुद्धिमान् ). Ś1 K2 प्राज्ञसंमितः; K4.6.7 V1 B6-9 Da3.4 Dn1.n4 Ds D3-6.8.9 बुद्धिसंमतं; B8 (marg.) D2 बुद्धिसंमितं ( D2 °तः ); D7 T G1-3.6 प्राज्ञसत्तमः ( for °संमतः ).

4 Before 4, MSS. ins. प्रह्लाद उवाच; some MSS. प्रह्लाद उ°. — a) B6.7 सुस्थः; B9 स्वच्छः; T2 स्वस्थ- ( for स्वस्थः ). K7 D4.9 श्लक्ष्णो; B6 D5.8 सक्तो; Dn1 Cn शुद्धो; D8 G1 M7 Cs शुक्रो; T2 -चित्तो ( for शक्तो ). T2 G3.6 शांतो ( for दान्तो ). — b) K4.6 B6.7.8 ( marg. as in text ) Da3.4 Dn1.n4 Ds D2.3.5.6.8 Cn.s निर्विधित्सो; D4 T1 G1.3 °वत्सो ( for °वित्सो ). Da4 [ऽ]नसूयकं; Ds1 [ऽ]नुसूयकः. ❋ Cn: निर्विधित्सो निरारम्भः । ❋ — c) K2 स्ववाग्; K7 D4.9 सतां; Da3 असद् ( for सुवाग् ). K2 बहुशतो ( for °मतो ). Da3 धीरः ( for लोके ). K4.6 V1 B6-9 Da4 Dn1.n4 Ds D2.3.5.8 Cn सु( K4.6 स्व )वाक्प्रगल्भो मेधावी; B8 ( marg. ) सुवागसद्बहुमतः. — d) Ds1 चरति; Cs °सि ( as in text ). B8 Da3.4 काकवत्; Cs बाल° ( as in text ).

5 a) K2 लाभे; D7 लाभान्; T2 G2 लोभं; M7 लोभान् ( for लाभं ). — b) D5 अथ ( for अनु- ). Ś1 K1.2 नालाभे ( K2 °भावे ) चैव शोचसि; K7 Ds1 °भेष्व- ( Ds1 °भे स्व )नुशोचसि ( Ds1 °ति ). — d) B8 कंचिद्; D6 किं च ( for किंचिद् ). B7 damaged from दव up to माणासु ( in 6a ). K3.6.7 V1 Dn4 D3.5 इव; Dn1 इह; D7 T G1-3.6 M1.5-7 अभि-; Cnp अव- ( as in text ). ❋ Cn: अवमन्यसे इति पाठे वीतदर्पोऽसीत्यर्थः । ❋

6 D6 om. ( hapl. ) 6a-7b. B7 damaged up to माणासु. — a) K6.7 D4.9 श्रोतसा. Da4 ह्रियमाणास्तु; Ds2 T G1.3 ह्रीयमाणासु. — b) K1.2.4 V1 B6.7 Dn1.n4 Ds1 D2 G1 विमना; Ca [अ]वि° ( as in text ). ❋ Ca: अविमना इव कूटस्थ इव ॥ Cn: अविमना इति पाठे तु अव्याकुलचित्तः ॥ Cs: विमना इव तात्पर्येण वर्तमानः । ❋ — d) D4.8.9 लक्षसे.

7 D6 G1 om. 7ab ( for D6, cf. v.l. 6 ). — a) K6 नानुशिक्षसि; K7 °शोचसि ( for °तिष्ठसि ). T2 धर्मार्थे; M1 °र्थों ( for °र्थौ ). — b) K6 B6-9 D8 D2 कामे वापि; K7 D4.9 M6 काममनु- ( for कामे चापि ). T2 वर्तते; M6 तिष्ठसि ( for वर्तसे ). — c) D4 अनावृत्य ( for °दृत्य ). — d) K2 सक्तश्च; B8 ( marg. ).9 युक्तश्च; G2 उत्तमश्च ( for मुक्तश्च ).

8 a) D7 श्रितं ( for श्रुतं ). K4.7 वाक्यं; D2 T G1 M1.5.7 किं वा ( by transp. ); D7 G2.3.6 वापि. — b) K2 का न; G1 किं नु ( for का नु ). — d) M7 ( *sup. lin.* as in text ) ज्ञेयो ( for श्रेयो ). M1 यदि हि ( for यदिह ). B7 damaged from ह up to धर्मवि ( in 9b ).

9 Before 9, Ś1 K1.2.4 V1 ( marg. ) Dn1.n4 D7 T G1-3 M6 ins. भीष्म उवाच. B7 damaged up to धर्मवि. — b) Da4 लोककर्म-; T1 लोके धर्म- ( for लोकधर्म- ). ❋ Cn: लोकस्य धर्मो जन्मजरादिस्तस्य विधानं कारणं तदभिज्ञः । ❋ — d) Ś1 K1.2.4 Da4 Dn4 D7 T G1.3.6 M1.5-7 प्रह्लादम्. K2 अनु**या; D7 T1 G3.6 M1 अनघार्थया ( for अनपा° ). D8 प्रह्लादयमपार्थिवं.

10 Before 10, Da3.4 ins. मुनिरुवाच; D7 T G2.3.6 M1.5-7 ब्राह्मण उ°. — a) Ś1 ( *sup. lin.* as in text ) K1.2.4.6 Da3 Ds D2.7.8 पश्य ( for पश्यन् ). Some MSS. प्रह्लाद. — b) ❋ Ca: अनिमित्ततः पुरुषकारासाधनेन ॥ Cn: करणहीनादेकादद्वितीयात् । ❋ — c) D4 G1 वृद्धि-; D7 वृद्धं ( for वृद्धिं ). K2 M1 च नाशं ( for विनाशं ). — d) D4 प्रव्यथे ( for च व्यथे ).

11 a) Ś1 K1.2.4 संपश्य; K7 V1 स दृश्य; B7 Da3.4 Dn1.n4 Ds D2.7 T G1-3.6 M1.5-7 Cn.s संदृश्या ( for °दृश्य ). — b) Ds1 वर्तमान- ( for °मानाः ).

C. 12. 7271
B. 12. 199. 71
K. 12. 197. 77

सत्ये कुरु स्थिरं भावं मा राजन्ननृतं कृथाः ।
कस्मात्त्वमनृतं वाक्यं देहीति कुरुषेऽशुभम् ॥ ७०
यदि जप्यफलं दत्तं मया नेषिष्यसे नृप ।
स्वधर्मेभ्यः परिभ्रष्टो लोकाननुचरिष्यसि ॥ ७१
संश्रुत्य यो न दित्सेत याचित्वा यश्च नेच्छति ।
उभावानृतिकावेतौ न मृषा कर्तुमर्हसि ॥ ७२

राजोवाच ।

योद्धव्यं रक्षितव्यं च क्षत्रधर्मः किल द्विज ।
दातारः क्षत्रियाः प्रोक्ता गृह्णीयां भवतः कथम् ॥ ७३

ब्राह्मण उवाच ।

न छन्दयामि ते राजन्नापि ते गृहमाव्रजम् ।
इहागम्य तु याचित्वा न गृह्णीषे पुनः कथम् ॥ ७४

धर्म उवाच ।

अविवादोऽस्तु युवयोर्वित्तं मां धर्ममागतम् ।
द्विजो दानफलैर्युक्तो राजा सत्यफलेन च ॥ ७५

स्वर्ग उवाच ।

स्वर्गं मा विद्धि राजेन्द्र रूपिणं स्वयमागतम् ।
अविवादोऽस्तु युवयोरुभौ तुल्यफलौ युवाम् ॥ ७६

राजोवाच ।

कृतं स्वर्गेण मे कार्यं गच्छ स्वर्ग यथासुखम् ।
विप्रो यदीच्छते दातुं प्रतीच्छतु च मे धनम् ॥ ७७

ब्राह्मण उवाच ।

बाल्ये यदि स्यादज्ञानान्मया हस्तः प्रसारितः ।
निवृत्तिलक्षणं धर्ममुपासे संहितां जपन् ॥ ७८

---

तस्मात्त्वम्; K7 D4.9 असात्त्वम्; D5.6 त(D6 अ)थैतद् (for कस्मात्त्वम्). K6 Bo.6.8.9 Da3.a4 Ds D8.8 भावं (for वाक्यं). — d) Ds1 कुरुते (for °षे). K6 [ऽ]श्रुतं; Ds [ऽ]भृशं; D6 [ऽ]श्रुते (for ऽशुभम्).

71 a) Da4 G3 जप्यं फलं; D7 T G1 जाप्यफलं (for जप्य°). G2 व्यर्थं (for दत्तं). — b) D3 D5 यदा; D6 सदा (for मया). K6 नेक्षिष्यसे; K7 D4–7.9 T G1.2 M1.5–7 नेच्छसि चेन् (K7 D4.9 भो; D6 मे; T2 M1.5–7 वै); V1 Bo.6–9 Da3.a4 Dn4 नैषि(Da4 °च्छि)ष्यसे; Dn1 Ds नेशिष्यसे (for नेषि°). — c) K6 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.8 धर्मेभ्यः सं· (for स्वधर्मेभ्यः).

72 a) K7 D9 संश्रुतं; G1 संश्रित्य; G8 संस्तुत्य (for संश्रुत्य). K6 [अ]दित्सेत; D7 T1 G1–3.6 दित्सेत्तु (for °त). — b) Ds1 D7 नेच्छसि (for °ति). — c) Ś1 G1 अनृतकाव्; K2.7 D4.6.7.9 T1 G2.3.6 M1.6 अनृति°; D5 आनृतकाव् (for आनृतिकाव्). — d) V1 D4.5.7.9 M1.6.7 वक्तुम् (for कर्तुम्).

73 d) M7 गृह्णीयाद् (for °यां).

74 a) ❀ Cn: न छन्दयामि प्रतिगृह्णीष्वेति न प्रार्थितवानस्मि । ❀ — b) K1.2 G6 [अ]पि (for नापि). Ś1 K1.3.4 आव्रजन्; V1 आगमं; B9 D8 (marg.) आगतं (for आव्रजम्). — c) D5.6 उप(D6 °पा)गम्य; D7 T G1–3.6 इहागत्य (for °गम्य). D4 त्रु (for तु). — d) D7 G1 गृह्णीते (for °षे).

75 a) D5.8 अविवादस्तु; G2 °देष्वस्तु (for °दोऽस्तु). ❀ Cn: अविवाद इति । राहूपरागादौ प्रतिग्रहमनिच्छति ब्राह्मणे यत्प्रकारान्तरेण दानं तद्दातुः फलावहं प्रतिग्रहीतुश्च न दोषकरमिति भावः । तथा च स्मृतिः — मनसा पात्रमुद्दिश्य जलमध्ये जलं क्षिपेत् । दाता तत्फलमाप्नोति प्रतिग्राही न दोषभाक् । इति । ❀ — b) K1.2 Dn1 वित्त; V1 Bo विद्धि (for वित्तं). K7 D4–7.9 T G1–3.6 M1.5–7 धर्मं मां (K7 मा) वित्तमा(D6 °द्धि आ)गतं. — c) V1 reads from द्विजो up to वादोऽस्तु (in 76a) on marg. — d) K7 D4.9 दत्तफलेन (for सत्य°).

76 V1 reads up to वादोऽस्तु on marg. D7 T G1–3.6 om. the ref. — c) T1 om. ऽस्तु. — d) Ś1 K1.2 सत्यफलौ (for तुल्य°).

77 b) B9 स्वर्ग गच्छ (by transp.); D7 T1 G1.3.6 गच्छ स्वर्गं. K6 Bo.6–9 Da3.a4 Dn1.n4 D8 D2.3.6.8 G2 यथागतं (for °सुखम्). — c) K7 V1 D7 T2 G1.2 यदिच्छते (K7 °ति); D4.6.9 यदीच्छति (for °च्छते). K6 Bo.6.7.8 (marg. as in text).9 Da3.a4 Dn1.n4 Ds D2.3.5.8 Cp गंतुं; K3 D4.6.9 प्राप्तुं; Cpp दातुं (as in text). — d) V1 प्रतीगृह्य (for °च्छतु). K4 स (for च). G6 धमः; M5 फलं (for धनम्). K6.7 Bo.6–9 Da3.a4 Dn1.n4 Ds D2–9 चीर्णं गृह्णातु मे फलं.

78 a) T1 बाले; T2 स्वास्थे (for बाल्ये). V1 बाल्यां वा यदि वाज्ञानान्: — b) D7 G1 हस्तं (for

निवृत्तं मां चिरं राजन्विप्रं लोभयसे कथम् ।
स्वेन कार्यं करिष्यामि त्वत्तो नेच्छे फलं नृप ।
तपःस्वाध्यायशीलोऽहं निवृत्तश्च प्रतिग्रहात् ॥ ७९

राजोवाच ।

यदि विप्र निसृष्टं ते जप्यस्य फलमुत्तमम् ।
आवयोर्यत्फलं किंचित्सहितं नौ तदस्त्विह ॥ ८०
द्विजाः प्रतिग्रहे युक्ता दातारो राजवंशजाः ।
यदि धर्मः श्रुतो विप्र सहैव फलमस्तु नौ ॥ ८१
मा वा भूत्सहभोज्यं नौ मदीयं फलमाप्नुहि ।
प्रतीच्छ मत्कृतं धर्मं यदि ते मय्यनुग्रहः ॥ ८२

भीष्म उवाच ।

ततो विकृतचेष्टौ द्वौ पुरुषौ समुपस्थितौ ।
गृहीत्वान्योन्यमावेष्ट्य कुचेलावूचतुर्वचः ॥ ८३
न मे धारयसीत्येको धारयामीति चापरः ।
इहास्ति नौ विवादोऽयमयं राजानुशासकः ॥ ८४
सत्यं ब्रवीम्यहमिदं न मे धारयते भवान् ।
अनृतं वदसीह त्वमृणं ते धारयाम्यहम् ॥ ८५
तावुभौ भृशसंतप्तौ राजानमिदमूचतुः ।

C. 12. 7298
B. 11. 199. 87
K. 12. 197. 93

---

हस्तः). — $^{c}$) K1 निर्वृत्ति-; K6.7 V1 Bo.6.7.9 Da3.a4 Dn1.n4 Ds D2–6.8.9 निवृत्त- (for °त्ति-). — $^{d}$) Ś1 K1.2.4 उपास्ये; K6 Ds1 °स्ते (for °से).

79 $^{a}$) K1 निर्वृत्त; K7 निवृत्त (for °त्तं). Da4 M7 मा (for मां). K6.7 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2–6.8.9 चिराद् (for चिरं). — $^{b}$) K7 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.6–8 T G1–3.6 M1.5–7 Cp त्रिप्र (for विप्रं). ❀ Cp: त्रिप्रेत्युपसर्गौ । ❀. — $^{c}$) M1.7 (*sup. lin.* as in text) येन (for स्वेन). K7 D9 हरिष्यामि (for करि°). — $^{d}$) Ś1 K1.2.4 ततो (for त्वत्तो). Ś1 K1.2.4 V1 B6.8.9 Da4 धनं (for फलं). K4 Da4 नृपं (for नृप). — $^{e}$) Ds1 ततः (for तपः-). D4 corrupt; D7 T1 G1–3.6 तपःस्वाध्यायकुशलो. — $^{f}$) K1 निर्वृत्तश्च; K7 D4.6.9 T G1–3.6 M1.5–7 विरतश्च; D7 विनीतश्च (for निवृत्तश्च). Da4 परिग्रहात् (for प्रति°).

80 V1 reads the ref. on marg. — $^{a}$) K6.7 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.5.6.8 M1 विसृष्टं; M5 [अ]तिसृष्टं (for निसृष्टं). K7 D4.5.9 मे (for ते). — $^{b}$) K7 D4.5.9 जपस्येह (D5 °स्य च) फलं त्वया. — $^{d}$) K1 सहितां; G1.2 संहितं (for स°). K1.2.4 तदस्त्विति; D7 तदास्त्विह (for तद°).

81 $^{a}$) Bo D7 द्विजः. — $^{c}$) Da4 G1 धर्मश्रु(G1 °श्रि)तो; D4.9 धर्मः स्मृतो (for धर्मः श्रुतो). D7 T2 G1–3.6 वापि; T1 चापि (for विप्र). — $^{d}$) K1 D4 M7 सहेव; G1 तथैव; M1.6 सहैवं (for °व).

82 V1 reads 82 on marg. — $^{a}$) V1 च (for वा). Bo तुल्यं; Da4 -भौज्ये (for -भोज्यं). K7 D4.9 मया सहै(D4 °हे)व भवतु; D5 मा वा सहायं भवतु. — $^{c}$) K1.4.6 D8 प्रतीक्ष (for °च्छ). D7 T G1–3.6 कर्म (for धर्मं). — $^{d}$) D7 T G1–3.6 चेन् (for ते). K7 D4.9 M6 अपह्नवः (M6 °वं); Dn1 अनुग्रहं.

83 $^{a}$) Ś1 K1.2.4 निकृत- (for विकृत-). K6 Bo.6–9 D6.8 -वेशौ; V1 Da3.a4 Dn1.n4 Ds D2.3 T G1–3.6 M1.5–7 -वेषौ (for -चेष्टौ). — $^{c}$) K7 D4.9 आवेश्यं (for °ष्ट्य). — $^{d}$) K1.2.4.6 Da3 Dn1.n4 Ds1 D2.5 कुचैलाव्; Da4 D4 कुवे° (for कुचे°).

84 $^{a}$) ❀ Cn: प्रार्थना हि राज्ञोऽननुरूपेति तस्य कामो विकृतसंज्ञः । शान्तिस्वभावस्यापि जापकस्य याचित्वापि दीयमानं न गृह्णातीति राजानं प्रति यः क्रोधः स विरूपसंज्ञः । ❀ — $^{b}$) D4 वा (for च). — $^{c}$) K7 V1 B6–9 Da4 D2.4.5.7.9 T G1–3.6 M1.5–7 इहास्तु (for °स्ति°). — $^{d}$) K1 यो (for अयं). T2 राजानुशासनः (for °शासकः).

85 $^{a}$) D4 सव्यं (for सत्यं). B8 Da4 T G2.3.6 M1.5–7 ब्रवीम्यहमृणं (B8 Da4 °मिति); G1 °मि ह्यनृणं (for °म्यहमिदं). — $^{c}$) G2 त्वाम् (for त्वम्).

86 $^{a}$) K6 V1 Bo.6.7.8 (marg. as in text).9 Da3 Dn1.n4 D2.3.5.6.8 सुभृशं तप्तौ (for भृशसंतप्तौ). — $^{c}$) K4.6 B6.7 Da3 Dn4 Ds1 D2.3.5 परीक्ष्य त्वं; K7 D4.9 °क्ष्यस्व; V1 Bo.8.9 Da4 Dn1 Ds2 D6.8 °क्ष त्वं; D7 T1 G2.3.6 M1.5–7 °क्ष्यौ तु; T2 °क्ष्य तु (for °क्ष्यतां). K4 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2–4.6.8.9 G3.6 स्यावो; D5 स्याता; D7 स्याताम्; T1 स्यावां (for स्याव). G1 परीक्ष्यौ यथा स्याव (submetric). — $^{d}$) V1 नावाविह; D7 आवामिह; T1 न वा° (for नावा°).

C. 12. 7288
B. 12. 199. 87
K. 12. 197. 93

परीक्ष्यतां यथा स्याव नावामिह विगर्हितौ ॥ ८६

विरूप उवाच ।

धारयामि नरव्याघ्र विकृतस्येह गोः फलम् ।
ददतश्च न गृह्णाति विकृतो मे महीपते ॥ ८७

विकृत उवाच ।

न मे धारयते किंचिद्विरूपोऽयं नराधिप ।
मिथ्या ब्रवीत्ययं हि त्वा मिथ्याभासं नराधिप ॥ ८८

राजोवाच ।

विरूप किं धारयते भवानस्य वदस्व मे ।
श्रुत्वा तथा करिष्यामीत्येवं मे धीयते मतिः ॥ ८९

विरूप उवाच ।

शृणुष्वावहितो राजन्यथैतद्धारयाम्यहम् ।
विकृतस्यास्य राजर्षे निखिलेन नरर्षभ ॥ ९०
अनेन धर्मप्राप्त्यर्थं शुभा दत्ता पुरानघ ।
धेनुर्विप्राय राजर्षे तपःस्वाध्यायशीलिने ॥ ९१
तस्याश्चायं मया राजन्फलमभ्येत्य याचितः ।
विकृतेन च मे दत्तं विशुद्धेनान्तरात्मना ॥ ९२
ततो मे सुकृतं कर्म कृतमात्मविशुद्धये ।
गावौ हि कपिले क्रीत्वा वत्सले बहुदोहने ॥ ९३
ते चोञ्छवृत्तये राजन्मया समपवर्जिते ।
यथाविधि यथाश्रद्धं तदस्याहं पुनः प्रभो ॥ ९४
इहाद्य वै गृहीत्वा तत्प्रयच्छे द्विगुणं फलम् ।
एकस्याः पुरुषव्याघ्र कः शुद्धः कोऽत्र दोषवान् ॥ ९५
एवं विवदमानौ स्वस्त्वामिहाभ्यागतौ नृप ।

---

87 B9 om. (hapl.) 87–89. — b) K4. 6. 7 V1 Bo. 8 Da4 Dn4 D2. 3. 8 T1 G1–3. 6 M1 गोफलं; Da3 D8 गौफलं; D4 गाफलं; D6 नोफलं (for गोः फलम्).

88 B9 om. 88 (cf. v. l. 87). Ś1 (*sup. lin.* as in text) विरूप (for विकृत). — b) M6 विकृतो (for विरूपो). Ś1 K1. 2. 4 महीपते (for नराधिप). — c) M6 ब्रवीतु (for °ति). K6. 7 V1 Bo. 6–8 Dn1. n4 Ds1 D2–4. 6. 8 M6 त्वां (for त्वा). — d) K1 D4 सत्याभास; G3 सत्त्वात्स्वासं (for मिथ्याभासं). K7 B6–8 Da3. a4 D4. 9 नराधमः; D7 T G1–3. 6 M1. 5–7 जनाधिप (for नरा°).

89 B9 om. 89 (cf. v. l. 87). — a) K7 विरूपं; M6 °पः. T2 धारयसे; G2 °यत (for °यते). — b) D7 T G1–3. 6 अद्य (for अस्य). K6 V1 Bo. 7. 8 (marg.) Dn1. n4 D8 D2. 3. 6. 8 ब्रवीतु; B6. 9 Da3. a4 ब्रवीहि (for वदस्व). — c) D5 तस्य (for तथा). K6. 7 V1 Bo. 6–8 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 करिष्येहम् (for °ष्यामि). — d) M1. 5–7 मनः (for मतिः). K6. 7 V1 Bo. 6–8 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 इति मे धीयते मनः.

90 Da4 विश्वरूप; T1 (also as in text) विकृत (for विरूप). — b) D5 यदेतद् (for यथै°). — c) D5 [इ]ह (for [अ]स्य). Ds1 D7 राजर्षेर् (for °र्षे). — K7 om. (hapl.) 90d–91c. — d) K1 नरर्षभः; K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8. 9 M5 नराधिप.

91 K7 om. 91abc (cf. v. l. 90). — b) D7 T1 G1. 2 पुरा दत्ता शुभानघ. — d) B7–9 D7 T1 G1. 2. 6 -शालिने (for -शीलिने).

92 a) T2 महाराजन् (for मया राजन्). — b) Ś1 K1. 2 अभ्येति; D6 अध्येति (for अभ्येत्य). V1 याचितं.

93 a) B8 Da3. a4 D5 M6 तेन (for ततो). — c) G2 damaged from गावौ up to व (in 93d). T2 G1 M7 गावो (for गावौ). K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 Cv च (for हि). Ś1 K1. 7 कपिलौ (K7 °लो) (for कपिले). K2. 6 Ds2 D8 कृत्वा (for क्रीत्वा). — d) M1 सहदोहने (for बहुदो°). ❀ Cs: वत्सले वत्सवत्यौ । ❀

94 a) Da4 ते नोंछ-; Ds1 तत्रोंछ-; G1 ते वोंछ- (for ते चोञ्छ-). Dn1 -वृत्तया; D7 -वृत्तयो (for °ये). — b) Ś1 K1. 2. 6. 7 Dn1 समयवर्जिते (K7 °तौ); K4 Bo सपरि°; D8 M7 समुप°; M1. 6 समवि° (M6 °व°) (for समप°). — c) Ds2 G6 यथाश्राद्धं; D7. 9 T1 G1. 2 °शुद्धं (for °श्रद्धं). — d) K1 तदद्याहं; K2. 4 तद्यथाहं; T1 तदास्याहं; G1 तदस्यान्नं; M1. 6 °स्याहः (for °स्याहं).

95 a) K4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6–8 T G1–3. 6 [ए]व (for वै). D7 T G1–3. 6 M1. 5–7 प्रयच्छामि (for गृहीत्वा तत्). K4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 सु (for तत्). — b)

कुरु धर्ममधर्मं वा विनये नौ समाधय ॥ ९६
यदि नेच्छति मे दानं यथा दत्तमनेन वै ।
भवानत्र स्थिरो भूत्वा मार्गे स्थापयतु प्रभुः ॥ ९७
राजोवाच ।
दीयमानं न गृह्णासि ऋणं कस्मात्त्वमद्य वै ।
यथैव तेऽभ्यनुज्ञातं तथा गृह्णीष्व माचिरम् ॥ ९८
विकृत उवाच ।
दीयतामित्यनेनोक्तं ददानीति तथा मया ।
नायं मे धारयत्यत्र गम्यतां यत्र वाञ्छति ॥ ९९
राजोवाच ।
ददतोऽस्य न गृह्णासि विषमं प्रतिभाति मे ।
दण्ड्यो हि त्वं मम मतो नास्त्यत्र खलु संशयः ॥ १००
विकृत उवाच ।
मयास्य दत्तं राजर्षे गृह्णीयां तत्कथं पुनः ।
काममत्रापराधो मे दण्डमाज्ञापय प्रभो ॥ १०१
विरूप उवाच ।
दीयमानं यदि मया नेषिष्यसि कथंचन ।
नियंस्यति त्वा नृपतिरयं धर्मानुशासकः ॥ १०२

C 12 7304
B. 12 199. 103
K 12. 197. 105

D6 प्रयच्छ; D7 T G1-3. 6 M1. 5-7 गृहीत्वा (for प्रयच्छे). — c) K4. 6 V1 B0. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 5-8 T G1-3. 6 M5. 7 एवं स्यात्; M1. 6 एतस्य (for एकस्याः). — d) K3 कः श्रद्धः; Ds2 विशुद्धः (for कः शुद्धः).

96 a) K1 D4 T2 विवदमानो (T2 °ना); Ds2 विवदमानौ (for विवद°). K6 च; Da4 lacuna; D7 T1 G1-3. 6 तु (for त्वम्). — b) K3 त्वम्; M7 ताम् (for त्वाम्). — c) K1 धर्मसधर्मं (for °मधर्मं). K4 D8 च (for वा). — d) K7 D9 समये; D8 [अ]विनये (for विनये). K6 B8-9 Dn1. n4 Ds D2-6. 8. 9 समादध; K7 °दधौ; V1 D7 T G1-3. 6 M1. 5-7 °दधाः (V1 °धः); B0 Da3. a4 °दधे (for °धय).

97 a) Ś1 K1. 2 नेच्छसे; K4 B6. 9 Ds1 D8 (before corr.). 5. 6. 8 नेच्छसि (for °ति). D7 T G1-3. 6 M1. 5-7 वादातुं (for मे दानं). — b) Ds1 वृत्तम् (for दत्तम्). — c) D5 तत्र (for अत्र). Ds2 D5 T1 G1. 2 स्थितो (for स्थिरो). — d) D7 स्थापयितुं; G1 °यति; M5 °यिता (for °यतु). M7 प्रभुं (for प्रभुः). K6. 7 V1 B0. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 मार्गे (Dn1 °र्गं-) स्थापयिताद्य नौ (D6 नौः).

98 a) Dn4 दीपदानं (for दीयमानं). K1. 4 गृह्णामि; K6 °ति (for °सि). — b) K1 धणं; K4 रणं (for ऋणं). — c) G1 तथैव (for य°). T2 G3. 6 ह्यनु- (for ऽभ्यनु-). Da4 -ज्ञानं (for -ज्ञातं).

99 M7 विकृतं (for °त). — a) K6 B0. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 M1. 6. 7 धारयामीति (for दीयतामिति). — b) K7 Ds2 D4. 9 ददामि (for ददानि). B8 (orig.). 7-9 Da3. a4 तथैव च; B6 (marg.) तदा मया (for तथा मया). — c) G3 नामं (for नायं). Ś1 K1. 2 M1. 7 वै (for मे). Ś1 K1. 2 धारयामि (for °यति). K4. 6 B0. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 5 6. 8 अद्य (for अत्र). — d) K4. 6. 7 B0. 6-9 Da3. a4 Dn1. n4 Ds D2-6. 8. 9 गच्छतां (for गम्यतां). Ś1 K1. 2 वांच्छसि (for °ति).

100 a) G2 (also as in text) M1. 6 गृह्णाति (for °सि). — b) D5 विषयं (for °मं). D6 T2 प्रतिभासि (T2 °मि) (for °भाति). T2 ते; M1. 5-7 मा (for मे). — c) Dn4 दंभो; D7 T G2. 3. 6 दस्यो; G1 दंडो (for दण्ड्यो). G2 त्वा (for त्वं).

101 T1 om. (hapl.) 101-102. — b) D7 G1 M1. 5. 6 गृह्णीयात् (for °यां). B6 (marg. as in text) ते (for तत्). — c) K2. 7 Ds1 D4. 7. 9 T2 G1-3. 6 M5 को (K2 का) ममात्र. K7 D4. 9 वै (for मे).

102 T1 om. 102 (cf. v. l. 101). — a) Dn4 दीपमानं; T2 दीय्य° (for दीय°). — b) K7 D4. 9 T2 G3. 6 M1. 5-7 न गृह्णासि; B6 Da4 D8 नैषिष्यसि; Dn1 Ds2 नेशिष्यसि; Ds1 नेच्छिष्यसि; D5 त्वं नेच्छसि; D7 G1. 2 गृह्णासि त्वं (for नेषिष्यसि). — c) K1. 7 नियस्यं(K1 °स्य)ति; Ds1 नियम्यति; D7 T2 G1-3. 6 नियच्छति (for नियंस्यति). K4. 6. 7 V1 B0. 6-9 Da3. a4 Dn1. n4 Ds D2-9 G1-3. 6 M5 त्वां (for त्वा).

103 a) T2 G1 त्वं; G3 स्वयं (hypermetric) (for त्वं). K7 D4. 9 T1 G3. 6 स्वयं मया याचितेन; D5 यन्मया याचितेनैतद्; D7 स्वधर्मेया याचितेन. ❀ Cv: अयाचितेनेति पदच्छेदः। ❀ — b) G1. 2 इव (for इह). K4 तं (for तत्). — c) G1 M7 गृह्णीयाद् (for °यां). — d) K4. 6. 7 V1 B1. 3 Da4 D8 D2-7. 9 T G1-3. 6

C. 12. 7305
199 B. 12. 196. 104
K. 12. 197. 110

विकृत उवाच ।

त्वं मया याचितेनेह दत्तं कथमिहाद्य तत् ।
गृहीयां गच्छतु भवानभ्यनुज्ञां ददानि ते ॥ १०३

ब्राह्मण उवाच ।

श्रुतमेतत्त्वया राजन्ननयोः कथितं द्वयोः ।
प्रतिज्ञातं मया यत्ते तद्गृहाणाविचारितम् ॥ १०४

राजोवाच ।

प्रस्तुतं सुमहत्कार्यमावयोर्गह्वरं यथा ।
जापकस्य दृढीकारः कथमेतद्भविष्यति ॥ १०५
यदि तावन्न गृह्णामि ब्राह्मणेनापवर्जितम् ।
कथं न लिप्येयमहं दोषेण महताद्य वै ॥ १०६

भीष्म उवाच ।

तौ चोवाच स राजर्षिः कृतकार्यौ गमिष्यथः ।
नेदानीं मामिहासाद्य राजधर्मो भवेन्मृषा ॥ १०७
स्वधर्मः परिपाल्यश्च राज्ञामेष विनिश्चयः ।
विप्रधर्मश्च सुगुरुर्मामनात्मानमाविशत् ॥ १०८

ब्राह्मण उवाच ।

गृहाण धारयेऽहं ते याचितं ते श्रुतं मया ।
न चेद्ग्रहीष्यसे राजञ्शपिष्ये त्वां न संशयः ॥ १०९

राजोवाच ।

धिग्राजधर्मं यस्यायं कार्यस्येह विनिश्चयः ।
इत्यर्थं मे ग्रहीतव्यं कथं तुल्यं भवेदिति ॥ ११०

---

M5 ददामि (for °नि).

104 a) K7 श्रुत्वा (for श्रुतम्). T1 श्रुत्वैव तत् (for श्रुतमेतत्). V1 मया (for त्वया). — b) B8 एतयोः (for अनयोः). G3. 6 त्वया (for द्वयोः). — c) K1 प्रतिज्ञा तु; D9 °ज्ञानं (for °ज्ञातं). K2 यत्तं; K7 तत्ते; D7 T G1-3. 6 दत्तं (for यत्ते). — d) M6 तं (for तद्). K7 अविचारितां.

105 a) K7 D4. 9 न प्रस्तुतं; D5 G6 प्रस्तुतस्तु (G6 °तः सु-); G2 प्रस्थितं सु- (for प्रस्तुतं सु-). — b) K6 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 5-8 T G1-3. 6 M1. 5-7 अनयोर् (for आव°). Da4 दुष्करं; T2 गहरं (for गह्वरं). D5 तथा (for यथा). — c) Ds1 D4. 9 द्रढीकारः; G3. 6 M7 दृढीकारं (for °कारः).

106 a) B9 तु (for न). K2 D5 गृह्णासि (for °मि). — b) D7 T G1-3. 6 M1. 5-7 जापकेन (for ब्राह्मणेन). B9 [अ]पि (for [अ]प-). Ś1 K1. 2. 4 ब्राह्मणस्य तपोर्जितं; K7 ब्राह्मणे जपवर्जितं. — c) G3. 6 कथं न लिप्यते योहं; M6 कथं कथं न लिप्येत. — d) Da3. a4 Dn1. n4 D2. 5 पापेन (for दोषेण).

107 a) G1 तव (for तौ च). B9 च (for स). K1. 2 राजर्षि- (for °र्षिः). — b) K1 -कृतकार्ये; K2. 4 व्रतकार्यौ; Da4 Ds1 कृतकार्यो (for °कार्यौ). Ś1 K1. 2. 4 भविष्यथः; Da4 Ds1 M1. 6. 7 गमिष्यथ (for °ष्यथः). — Before 107cd, M5 ins. राजा. — d) Da4 lacuna for राजधर्मो.

108 a) K4 परिपालाश्च (for °पाल्यश्च). K6 V1 Bo. 6. 7. 9 Dn1. n4 Ds D2. 3. 6. 8 तु (for च). — b) K6 रक्षामि (for राज्ञाम्). K6 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 5-8 T G1-3. 6 M1. 5-7 इति (for एष). — c) D7 T1 G1. 2 विप्रबंधुश्च (for °धर्मश्च). K6 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 8 गहनो; D5 स पुरुद्; D7 G1. 2 M6 स गुरुद् (for सुगुरुद्). — d) Ś1 K1. 2. 4 न ममात्मानम् (for मामना°). Ś1 K1. 2. 7 D4. 5. 9 T2 M1. 5. 6 आविशेत् (for °शत्).

109 a) D7 T1 G1-3. 6 M5 यत्; T2 यं (for ऽहं). K6 Bo. 6 (marg. as in text). 7-9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 च (for ते). — b) T2 याचितः (for °तं). K1 तं श्रुतं; K6 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2-9 T2 G3. 6 M1. 5-7 संश्रुतं; K7 T1 स श्रुतं; G1. 2 संश्रितं (for ते श्रुतं). — c) Ś1 K1. 2. 4 V1 Bo. 6-9 D3. 9 T2 M7 गृहीष्यसे; Da3 Ds D5 ग्र(Ds2 D5 गृ)हिष्यसे; G1 ग्रहीष्यते (for °ष्यसे). — d) K7 D4. 5. 9 शप्स्यामि; Da3. a4 शपेयं; D6 शपेष्यं; D8 शापिष्ये (for श°). K6 त्वं; T2 G3. 6 त्वा (for त्वां). V1 Ds1 असंशयः (Ds1 °यं) (for न संशयः).

110 K1 om. the ref. — a) Ds2 यस्याहं; D6 पश्यायं (for यस्यायं). — b) D7 T G1-3. 6 M5 [अ]स्य; M1. 6 [ए]ष (for [इ]ह). G3 विनिश्चयं. — c) K7 V1 Bo. 6. 7. 9 Da4 Dn1 Ds D3-5. 7 T G2. 3. 6 M7 गृहीतव्यं (for ग्रही°). — d) D7 T G2. 3. 6 तथ्यं; G1 तस्य; M5 तस्सं- (for तुल्यं).

111 a) Ś1 K2 न पूर्वं; K1 अपूर्वतो; K4. 6 V1 Bo. 7-9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 अपूर्वं मे; D7 T G1.

एष पाणिरपूर्वं भो निक्षेपार्थं प्रसारितः ।
यन्मे धारयसे विप्र तदिदानीं प्रदीयताम् ॥ १११

ब्राह्मण उवाच ।

संहितां जपता यावान्मया कश्चिद्गुणः कृतः ।
तत्सर्वं प्रतिगृह्णीष्व यदि किंचिदिहास्ति मे ॥ ११२

राजोवाच ।

जलमेतन्निपतितं मम पाणौ द्विजोत्तम ।
सममस्तु सहैवास्तु प्रतिगृह्णातु वै भवान् ॥ ११३

विरूप उवाच ।

कामक्रोधौ विद्धि नौ त्वमावाभ्यां कारितो भवान् ।
समेति च यदुक्तं ते समा लोकास्तवास्य च ॥ ११४
नायं धारयते किंचिज्जिज्ञासा त्वत्कृते कृता ।
कालो धर्मस्तथा मृत्युः कामक्रोधौ तथा युवाम् ॥ ११५
सर्वमन्योन्यनिकषे निघृष्टं पश्यतस्तव ।
गच्छ लोकाञ्जितान्स्वेन कर्मणा यत्र वाञ्छसि ॥ ११६

भीष्म उवाच ।

जापकानां फलावाप्तिर्मया ते संप्रकीर्तिता ।
गतिः स्थानं च लोकाश्च जापकेन यथा जिताः ॥ ११७
प्रयाति संहिताध्यायी ब्रह्माणं परमेष्ठिनम् ।
अथ वाग्निं समायाति सूर्यमाविशतेऽपि वा ॥ ११८

C. 12. 7320
B. 12. 199. 119
K. 12. 197. 129

---

3.6 अपूर्वां भो ; G2 °वां गो- ; Cp °वं भो (as in text). ❀ Cp : अपूर्वमिति नञर्थेऽकारः । ❀ — b) G2 प्रसारितं. ❀ Cn : निक्षेपार्थं प्रतिगृह्य प्रदानार्थम् ॥ Cs : निक्षेपार्थं फलभोगं विना स्थापनार्थम् । ❀ — c) K1 यं (for यन्). — d) M1 तम् (for तद्).

112 a) K1 सहितां (for संहितां). K1. 2. 4. 6. 7 D3 G3. 6 जपतां ; T2 जपतो ; G1 जापता (for ज°). K7 D4. 7. 9 M7 यावत् (for यावान्). — b) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 T G1–3. 6 M5. 7 गुणः कश्चित्कृतो मया ; K7 D4. 9 पुण्यं किंचिन्मया कृतं ; D5. 7 M1. 6 गुणः कश्चिन्मया कृतः. — c) D7 G1 -गृह्णीयाद् ; T1 G2. 3. 6 °या (for °ष्व). — d) G1 इति (for यदि). G1 M5 कश्चिद् (for किंचिद्).

113 K7 om. (hapl.) from 113a up to the ref. in 114. — a) K2. 4 जपम् ; K6 वलम् (for जलम्). K1 निपतति (for °तितं). — b) K1 सम- (for मम). — c) K1. 2 समयस्तु (for सममस्तु). B6. 9 सहैवावां (for °वास्तु). — d) D4. 5. 7. 9 T G1–3. 6 M1. 5–7 मे (for वै).

114 K7 om. the ref. (cf. v. l. 113). — b) K7 om. आवाभ्यां. K7 [आ]कारितो ; Da4 कारितौ. — After 114ab, Cv Kumbh. ed. ins. :

526* जिज्ञासमानौ युवयोर्मनोत्थं तु द्विजोत्तम ।
[Cv मनोच्छं (for °त्थं).]

— c) K4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 T G1–3. 6 M1. 5–7 सहेति (for समेति). — d) Ś1 K2 D4 समालोकस् ; D7 T G1–3 M1. 5–7 समो लोकस् ; G6 सतो लोकस् (for समा लोकास्). Ś1 K1. 2. 4 तवापि (for तवास्य).

115 b) K2 मया ; K6 कृतां ; Ds1 कृतं (for कृता). — d) Da4 कालक्रोधा ; D7 T1 G1. 2 कामक्रोधस् (for °क्रोधौ).

116 a) K4. 6 Bo. 6–9 Da3. a4 Dn1 Ds D2. 3. 5–8 T2 G3. 6 Cp -निष्कर्षे ; K7 -निःकषे ; V1 T1 -निकर्षे ; Dn4 -विप्रर्षे ; T2 (sup. lin.) -निष्कर्म्ये ; Cpp -निकषे (as in text). — b) Da4 निघृतं ; D5 निर्घृष्टं ; T2 निष्कृष्टं ; G1. 2 M1. 5–7 Kumbh. ed. निकृष्टं ; Cn. p निघृष्टं (as in text). ❀ Cn : निघृष्टं परीक्षितम् । ❀ — After 116ab, Kumbh. ed. ins. :

527* सर्वेषामुपरि स्थानं ब्रह्मणोऽव्यक्तजन्मनः ।
युवयोः स्थानमतुलं निर्द्वंद्वममलात्मकम् ।
सर्वे गच्छाम यत्र स्वान्स्वाल्ँलोकांश्च तथा वयम् ।

— d) G1 वांछति. — After 116, Kumbh. ed. ins. :

528* ततो धर्मयमाद्यास्ते वाक्यमूचुर्नृपद्विजौ ।
अस्माकं यः स्मृतो मूर्धा ब्रह्मलोकमिति स्मृतम् ।
तत्रस्थौ हि भवन्तौ हि युवाभ्यां निर्जिता वयम् ।
युवयोः काम आपन्नस्तत्काम्यमविशङ्कया ।

117 b) Da4 मीयते (for मया ते). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6–8 T G1–3. 6 M5. 7 संप्रदर्शिता (for °कीर्तिता). — c) K1 G1 गति- (for गतिः). Dn4 Ds D8 लोकेस्मिन् (for लोकाश्च). — d) K1. 2. 4 T2 M6 यथार्जिताः ; D8 यथा जिता.

118 a) K1 संहिताख्यायी ; G1 °तां ध्यायन् (for °ताध्यायी). — b) D5 ब्रह्मणं ; D6 T1 (before corr.)

C. 12. 7321
B. 12. 199. 120
K. 12. 197. 130

स तैजसेन भावेन यदि तत्राश्नुते रतिम् ।
गुणांस्तेषां समादत्ते रागेण प्रतिमोहितः ॥ ११९
एवं सोमे तथा वायौ भूम्याकाशशरीरगः ।
सरागस्तत्र वसति गुणांस्तेषां समाचरन् ॥ १२०
अथ तत्र विरागी स गच्छति त्वथ संशयम् ।
परमव्ययमिच्छन्स तमेवाविशते पुनः ॥ १२१
अमृताच्चामृतं प्राप्तः शीतीभूतो निरात्मवान् ।
ब्रह्मभूतः स निर्द्वंद्वः सुखी शान्तो निरामयः ॥ १२२
ब्रह्मस्थानमनावर्तमेकमक्षरसंज्ञकम् ।
अदुःखमजरं शान्तं स्थानं तत्प्रतिपद्यते ॥ १२३
चतुर्भिर्लक्षणैर्हीनं तथा षड्भिः सषोडशैः ।
पुरुषं समतिक्रम्य आकाशं प्रतिपद्यते ॥ १२४
अथ वेच्छति रागात्मा सर्वं तदधितिष्ठति ।
यच्च प्रार्थयते तच्च मनसा प्रतिपद्यते ॥ १२५

---

ब्राह्मणं ( for ब्रह्माणं ). — c) M7 चाग्निः ( for वाग्निं ). D7 G1.2 समाधाय ( for समायाति ). — d) M7 पूर्वम् ( for सूर्यम् ). Ś1 K2.4 [ऽ]पि च ; K1 lacuna ; T2 [ऽ]थ वा ; M1.6 [ऽ]ति वा ( for ऽपि वा ). K7 D4.5.9 सूर्यमभ्येति वा नृप.

119 a) B9 D4 तेजसेन ( for तै° ). — b) Ś1 K1.2.4 रविः ; G3.6 रतिः ( for रतिम् ). K6 V1 Bo.6.7.8 ( marg as in text ) 9 Da3.a4 Dn1.n4 D8 D2.3.5.6.8 यदि तत्र रम( V1 भव )त्युत. — c) K1 Dn1 D4 गुणास् ( for गुणांस् ). K6 Bo.6 ( marg.; orig. as in text ) 7.9 Da3.a4 Dn1.n4 D8 D2.3.5.6.8.9 G1 समाधत्ते ( for °दत्ते ). — d) K2.7 प्रतिमोहिताः.

120 b) K1 भूताकाश- ( for भूम्या° ). K2.4 -शरीरगाः. — c) G1 सगरस् ( for सरागस् ). — d) K1 B6-9 D5 समाचरेत् ; K7 D4.7.9 T G1-3.6 M1.5-7 समादद( T °ध )त् ( for °चरन् ).

121 a) D5 विरागः ( for °गी ). Ds2 सन् ; D7 T G1-3.6 च ; D8 lacuna ( for स ). — b) M1.5.6 संशमं ( for संशयम् ). K6 गच्छति त्वव्ययसंशयं ; D5.8 परं गच्छत्य( D8 °ति )संशयं ; M7 गच्छंत्तस्त्वममं°. — c) K6 Da4 यदमव्ययम् ; Bo.8 Ds1 D3.6.8 पदम° ( for परम° ). Ś1 K1.2.4 इच्छेत्स ; B8.9 इच्छंत्यस् ( for इच्छन्स ).

122 a) K1 T2 अमृताश्च् ; K2.7 °तश्च् ( for °ताच् ). D6 त्वमृतं ; M1 च मृतः ( for चामृतं ). — b) K4.6 B8 Dn1.n4 D8 D2.3.5.6 शांतीभूतो ; K7 D8 शांति° ; Da4 G2 शीति° ; D7 शांत° ; G1 शीत° ( for शीती° ). ❀ Cs : निरात्मवान् शरीरहीनः । ❀ — c) K6 प्रत्यग्भूतः ; Da4 ब्रह्मभूताः. — d) ❀ Cn : निरामयः द्वैतदर्शन हीनः । ❀

123 a) K6.7 V1 Bo.6-9 Da3 D8 D3.4.7-9 T G2.3.6 M6-7 ब्राह्मं ; D5 ब्रह्मं ( for ब्रह्म- ). K7 D4.9 अनावर्त्यम् ; G1 °वृत्तम् ( for °वर्तम् ). — b) T2 G1 -संज्ञिकं ; M5 -संज्ञितं ( for -संज्ञकम् ). B6 ( marg. as in text ) एकाक्षरमसंज्ञितं. — c) T1 G2 अरजः ( for अजरं ). — d) K1 स्थाने तत् ; K7 D4.9 ध्यानेन ; T1 G1-3.6 M1.5 शीतं तत् ; T2 गीतं तत् ; M6.7 शिवं तत् ( for स्थानं तत् ). B7 प्रतिपाद्यते ( for °पद्यते ).

124 K1 D6 om. (hapl.) 124 ; D8 om. ( hapl. ) 124-125. V1 reads 124 on marg. — a) Ś1 K2 हीनस् ; M1.6 भिन्नं ( for हीनं ). ❀ Cn : चतुर्भिः प्रत्यक्षागमानुमानचेतोभिर्हीनं रूपगुणसंबन्धजडत्वादिभिर्विरहितम्। Cs : चतुर्भिर्लक्षणैरिति । उत्पत्तिक्षयवृद्धिविनाशैः । जरायुजाण्डजस्वेदजोद्भिज्जैरित्यपरे । यद्वा संकल्पालोचनप्रयत्नचेष्टारूपैर्वा ॥ Cv : चतुर्भिरण्डजस्वेदजोद्भिज्जजरायुजाख्यैः । ❀ — b) D7 G1.2 साग्निः ( for षड्भिः ). V1 D6 च ( for स- ). K2 -शोडकैः ( for -षोडशैः ). ❀ Cn : षड्भिरूर्मिभिः। अशनापिपासाभ्यां प्राणधर्माभ्यां शोकमोहाभ्यां चित्तधर्माभ्यां जरामृत्युभ्यां देहधर्माभ्यां च हीनम् । अत एव प्राणाद्यात्मकषोडशकगणेनैव तेऽशनादयः सहिताः ॥ Cs : सषोडशैः । एकादशेन्द्रियाणि पञ्च विषया इति षोडश विकारास्तत्सोहैतः । स्थूलसूक्ष्मव्यवहितविप्रकृष्टातीतानागतवर्तमानाभावालोचनसंकल्पाभिमानाध्यवसायसृष्ट्यनुग्रहप्रलयविषयस्य सहितैरित्यन्ये ॥ Cv : षोडशैः, एकादशेन्द्रियपञ्चभूतात्मकषोडशकलासहितैः । षड्भिः कामक्रोधादिभिः । ❀ — c) K4 Da3 Dn1.n4 Ds1 D2.3.5 तमति( D5 °धि )क्रम्य ( for सम° ). — d) Ś1 K2 चाकाशं ; T2 M5 ह्याकाशं ( for आ° ). ❀ Cs : आकाशं परिच्छिन्नानामवकाशदानात् आकाशं परमात्मानम् ॥ Cv : आ समन्तात् काशनादाकाशपदवाच्यं परमात्मानम् । ❀

125 D8 om. 125 ( cf. v. l. 124 ). — a) K1.2.4.6 V1 Bo.6-9 Da3 a4 Dn1.n4 D8 D2.3.5.6 M1 नेच्छति ; K7 G3.6 चेच्छसि ; D4.9 M5 चेच्छाति ; D7 T1 G1.2 वेच्छासि ; M7 नेच्छासि ( for वेच्छति ). — c) K1 यश्च ; D5 यत्तत् ( for यच्च ).

126 ab) K4.6 Bo.6 Da3 Dn4 D2.3.5.6.8 चेक्षते ;

अथ वा वीक्षते लोकान्सर्वान्निरयसंस्थितान् ।
निःस्पृहः सर्वतो मुक्तस्तत्रैव रमते सुखी ॥ १२६

एवमेषा महाराज जापकस्य गतिर्यथा ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ १२७

इति श्रीमहाभारते शान्तिपर्वणि द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

# १९३

युधिष्ठिर उवाच ।
किमुत्तरं तदा तौ स्म चक्रतुस्तेन भाषिते ।
ब्राह्मणो वाथ वा राजा तन्मे ब्रूहि पितामह ॥ १
अथ वा तौ गतौ तत्र यदेतत्कीर्तितं त्वया ।
संवादो वा तयोः कोऽभूत्किं वा तौ तत्र चक्रतुः ॥ २

भीष्म उवाच ।
तथेत्येवं प्रतिश्रुत्य धर्मं संपूज्य चाभिभो ।
यमं कालं च मृत्युं च स्वर्गं संपूज्य चार्हतः ॥ ३
पूर्वं ये चापरे तत्र समेता ब्राह्मणर्षभाः ।
सर्वान्संपूज्य शिरसा राजानं सोऽब्रवीद्वचः ॥ ४

C. 12 7333
B. 12. 200. 4
K. 12. 198. 4

---

K7 D4. 9 [अ]पेक्षते; V1 B7-9 Da4 D8 [अ]वेक्षते; Dn1 चक्षते; D7 T G1-3. 6 M1. 5-7 [उ]पेक्ष( D7 T1 °क्ष्य )ते ( for वीक्षते ). Ś1 K1. 2 transp. लोकान् and सर्वान्. Ś1 K1. 2 नियम- (for निरय-). K4. 6 V1 B0. 6-9 Da3. a4 Dn1. n4 D8 D2. 3. 6-8 T G1-3. 6 M1. 6 -संज्ञितान्; D5 M5. 7 -संज्ञकान् (for -संस्थितान्). — c) B0 Da4 युक्तस् (for मुक्तस्). — d) K4. 6 V1 B0. 6-9 Da3. a4 Dn1. n4 D8 D2. 3. 6. 8 वै (for [ए]व). K6 B0 Dn1. n4 D8 D2. 3. 5-8 T2 सुखं (for सुखी).

127 Before 126, M5 ins. भीष्मः. — a) V1 B6 (marg.). 8. 9 Ds1 एष; B6 (orig.) एतत्; Da3. a4 एव; G2 एषां (for एषा). D7 T1 G1. 2 महाभाग (for °राज). — b) T2 जापकानां (for °कस्य). B6. 7. 8 (marg. as in text). 9 Da3 (marg.). a4 जापको वदते य( Da3. a4 त )था; D5 यथा भवति जापकः. — c) K7 V1 B0. 6-9 Da4 D8 D4. 9 T2 G1 M1. 5-7 तत्ते सर्वं समाख्यातं; D5 तत्सर्वं ते समा°; D7 T1 G2. 3. 6 तत्तत्सर्वं समा°. — d) K6 Da3. a4 Dn4 Ds2 D2. 3. 6. 8 अर्हसि ( K6 °ति ) (for इच्छसि).

Colophon. — *Sub-parvan:* Ś1 K1. 2. 4. 6. 7 V1 B0. 6-9 Da3. a4 Dn1. n4 D8 D2-9 T G1-3. 6 M1. 5-7 मोक्षधर्म. — *Adhy. name:* Ś1 K2. 4. 6. 7 B0. 6-9 Da3. a4 Dn1 D8 D2-6. 8. 9 जापकोपाख्यानं; V1 जापकमाहात्म्यं; M1. 6 जापकोपाख्याने इक्ष्वाकुब्राह्मणसंवादः; M5 जापकोपाख्याने कालमृत्युयमादिसंवादः; M7 इक्ष्वाकुब्राह्मणसंवादः. — *Adhy. no.* (figures, words or both): B7 Dn4 D8 D7 T1 G1. 3. 6 M1. 5-7 25; Dn1 26; D2. 8 26; T2 G2 39. — *Śloka no.:* Da4 130; Dn1 29; Dn4 129; D8 127.

## 193

1 a) D4 सदा; M5 ततस् (for तदा). G3. 6 तस्मिंश्च (for तौ स्म). — b) K6 B0. 6. 7. 8 (marg.). 9 Da3. a4 Dn1. n4 D8 D2. 3. 5. 6. 8 तस्य (for तेन). Ś1 K1. 2. 6. 7 D4. 9 भाषितं; D7 T G1. 3. 6 M1. 5-7 भाषितौ. — c) K6 B0. 6-9 Da3. a4 D8 D3-9 T1 G2. 3. 6 M5. 7 transp. the second वा and राजा.

2 a) M5 वैतौ (for वा तौ). G3. 6 यत्र (for तत्र). — b) G3 तद् (for यद्).

3 a) Da4 अथ (for तथा). Ś1 K1. 2. 7 M5 [इ]त्येव; D7 T1 G1-3. 6 [इ]ति च; T2 [इ]त्येतत् (for [इ]त्येवं). — b) K1 संपूज्यतामिमौ. K4 च विभो; K6 वै प्रभो; K7 D4. 9 जापकः; V1 B0. 6-9 Da3. a4 Dn1. n4 D8 D2. 3. 5. 6. 8 च प्रभो; D7 T G1-3. 6 M1. 5-7 तावुभौ (for चाभिभो). — d) K1 [अ]र्हताः; K7 D4. 9 [अ]प्रतः; D7 T G1-3. 6 M5 [आ]हतुः (for [अ]र्हतः). ❀ Cn. v: अर्हतः पूज्यान्। ❀

4 Before 4, G3. 6 ins. ब्राह्मणः. — a) Ś1 K1. 2 सर्वे; K4 सर्व (for पूर्वं). K6 वापरे; K7 च परे; M1 चामरे (for चापरे). — b) K4 D4. 7 ब्राह्मणर्षभः (K7 °भ). — c) G1 पूर्वान् (for सर्वान्). B8 मनसा (for शिरसा). — d) K6 V1 B0. 6-9 Da3. a4 Dn1. n4 D8 D2. 3. 5. 6. 8 M1. 6 द्विजः (for वचः).

C. 12. 7334
B. 12. 200. 5
K. 12. 198. 5

फलेनानेन संयुक्तो राजर्षे गच्छ पुण्यताम् ।
भवता चाभ्यनुज्ञातो जपेयं भूय एव हि ॥ ५
वरश्च मम पूर्वं हि देव्या दत्तो महाबल ।
श्रद्धा ते जपतो नित्यं भवितेति विशां पते ॥ ६

राजोवाच ।

यद्येवमफला सिद्धिः श्रद्धा च जपितुं तव ।
गच्छ विप्र मया सार्धं जापकं फलमाप्नुहि ॥ ७

ब्राह्मण उवाच ।

कृतः प्रयत्नः सुमहान्सर्वेषां संनिधाविह ।
सह तुल्यफलौ चावां गच्छावो यत्र नौ गतिः ॥ ८

भीष्म उवाच ।

व्यवसायं तयोस्तत्र विदित्वा त्रिदशेश्वरः ।
सह देवैरुपययौ लोकपालैस्तथैव च ॥ ९
साध्या विश्वेऽथ मरुतो ज्योतींषि सुमहान्ति च ।
नद्यः शैलाः समुद्राश्च तीर्थानि विविधानि च ॥ १०
तपांसि संयोगविधिर्वेदाः स्तोभाः सरस्वती ।
नारदः पर्वतश्चैव विश्वावसुर्हहा हुहूः ॥ ११
गन्धर्वश्चित्रसेनश्च परिवारगणैर्युतः ।
नागाः सिद्धाश्च मुनयो देवदेवः प्रजापतिः ।
विष्णुः सहस्रशीर्षश्च देवोऽचिन्त्यः समागमत् ॥ १२

---

5 Before 5, T ins. ब्राह्मणः. — b) M5 राजन्मे (for राजर्षे). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 T G1–3. 6 M1. 5–7 मुख्यतां; K7 पुण्यवान् (for °ताम्). — c) D2 lacuna; D5 वा; D6 तु (for च). Ś1 K1. 2. 4 [अ]भ्यवज्ञातो. — d) K6 B7. 8 Dn1. n4 Ds D2. 3. 6. 8 ह; D7 T G1–3. 6 M1. 6. 7 च (for (for हि).

6 a) K1 समपूर्वं (for मम पूर्वं). — b) K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 T G1–3. 6 M1. 5–7 transp. देव्या and दत्तो. K6 M1 महाबलः; K7 D4. 7. 9 T1 G1–3. 6 M5. 7 °फलः; T2 °फलं (for °बल). — c) K7 जायते (for जपतो). — d) K2. 4 भवता; K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 भवतु; K7 D4. 7. 9 T G1–3. 6 M1. 6. 7 भवित्री; M5 भवति (for भविता as in Ś1 K1 only).

7 a) K1. 4 Da3 यद्येव; D4 यदेवम्. K1. 4 Da3 D7 T1 G1. 3–6 M1. 5–7 सफला (for अफला). ❀ Ca: अफला अनाकाङ्क्षितफला । ❀ — b) M1. 6. 7 वा (for च). B7 जपितं; T2 जपितुस्. K7 स च (for तव). — d) D7 T G1–3. 6 M6. 7 मामकं (for जापकं).

8 Ś1 K1. 2 om. the ref. — a) K6 D7 T1 G2 कृत-; T2 कृतं. Ś1 K1. 2 सुमते; D7 T1 स महान् (for सुम°). — b) G2 lacuna for सर्वेषां. D7 T G2. 3. 6 अपि (for इह). — c) K7 सत्य-; V1 सम- (for सह). K6. 7 V1 Da3 Dn1. n4 Ds D2. 8 M6 आवां (for चावां). — d) K7 गच्छ भो (for गच्छावो).

9 Ś1 K1. 2. 4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6 om. the ref. — a) G3 न योस् (for तयोस्). — b) Ś1 K1 त्रिदिशेश्वरः; K4 D8 त्रिदशेश्वरं. — d) Da4 Ds1 लोकपालौ; G1. 2 सह देवैस्.

10 a) T1 साध्ये. K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 च विश्वे (for विश्वेऽथ). D5 स-; D7 G3. 6 M1. 5–7 च (for ऽथ). Ś1 K1. 2. 4 साध्यविश्वेश- मरुतो. — b) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 D2. 3. 6. 8 वाद्यानि; K7 B8 (marg.) D4. 5. 9 वाक्यानि (for ज्योतींषि). D7 T G1–3. 6 M1. 5–7 वाक्यानि त्रिविधानि च. — c) Da4 नद्याः. K7 D4 5. 9 नद्यः समुद्राः शैलाश्च.

11 a) ❀ Cs: संयोगविधिर्योगशास्त्रम् । ❀ — b) Da4 देवाः (for वेदाः). Ś1 K1. 2. 4 स्तोताः; D6 स्तोमाः. — d) Ś1 K1. 2 हहा हूहूः; K7 हाहा हुहुः; Bo हीहा हुहूः; Da3 D3. 8. 9 M7 हहाहुहू; Da4 हहाहूहू; D5 हाहाहुहू. D7 T1 G1–3. 6 विश्वावसुपरावसू; T2 M1. 5. 6 °वसूहहा- हु (T2 °हू) हू. — After 11, D7 T1 G1–3. 6 ins.:

529* तुम्बुरुप्रमुखाश्चैव हाहा हूहूस्तथैव च ।

12 b) K7 D4. 9 परिचार- (for °वार-). Ś1 K1. 2 D8 M1. 7 -गुणैर् (for -गणैर्). K1 M7 युताः; K7 D4. 7. 9 T1 G1–3. 6 सह (for युतः). — c) T1 नाना- (for नागाः). — d) Da4 देवदेव-. — After 12cd, Kumbh. ed. ins.:

530* आजगाम च देवेशो ब्रह्मा वेदमयोऽव्ययः ।

— e) K7 D4. 9 T G1–3. 6 M1. 5 सहस्रशीर्षा च. — f) K7 दिवो; G2 देवा. Da4 T2 समागमन्.

13 a) Dn1 अवाद्यत; M1 अवद्यंत. B6. 8. 9 M1 [अं]तरीक्षे च; D5 °रिक्षेषु. V1 तु (for च). — b) Ś1 K1. 2 भेरीस् (for भेर्यस्). G1 सूर्याणि (for तूर्या-

अवाद्यन्तान्तरिक्षे च भेर्यस्तूर्याणि चाभिभो ।
पुष्पवर्षाणि दिव्यानि तत्र तेषां महात्मनाम् ।
ननृतुश्चाप्सरःसंघास्तत्र तत्र समन्ततः ॥ १३
अथ स्वर्गस्तथा रूपी ब्राह्मणं वाक्यमब्रवीत् ।
संसिद्धस्त्वं महाभाग त्वं च सिद्धस्तथा नृप ॥ १४
अथ तौ सहितौ राजन्नन्योन्येन विधानतः ।
विषयप्रतिसंहारमुभावेव प्रचक्रतुः ॥ १५
प्राणापानौ तथोदानं समानं व्यानमेव च ।
एवं तान्मनसि स्थाप्य दधतुः प्राणयोर्मनः ॥ १६
उपस्थितकृतौ तत्र नासिकाग्रमधो भ्रुवौ ।
कुङ्कुण्यां चैव मनसा शनैर्धारयतः स्म तौ ॥ १७
निश्चेष्टाभ्यां शरीराभ्यां स्थिरदृष्टी समाहितौ ।
जितासनौ तथाधाय मूर्धन्यात्मानमेव च ॥ १८
तालुदेशमथोद्दाल्य ब्राह्मणस्य महात्मनः ।
ज्योतिर्ज्वाला सुमहती जगाम त्रिदिवं तदा ॥ १९
हाहाकारस्ततो दिक्षु सर्वासु सुमहानभूत् ।

C. 12. 7350
B. 12. 200. 21
K. 12. 198. 21

---

णि ). K4 D6 चाविभो ; K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–5. 8 वा विभो ; D7 T G1–3. 6 M1. 5–7 च प्रभो ( for चाभिभो ). — d ) Ś1 K1. 2. 4 पेतुस् ( for तत्र ). D5 पेतुर् ( for तेषां ). K7 D4. 9 तत्र पेतुर्महात्मनोः. — f ) Ś1 K1. 2. 4. 7 D4. 9 विशां पते ( for समन्ततः ).

14 a ) Da3. a4 सुख- ( for अथ ). — b ) Da4 ब्रह्मणं. — c ) T1 ( before corr. ) संसिद्धिस्. K4. 6 V1 B6. 7 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 G1. 2 M6. 7 महाभागस्.

15 Before 15, D7 T1 G3. 6 M5 Kumbh. ed. ins. भीष्म उवाच. — a ) B9 lacuna ; M1 संहितौ. — b ) D7 T1 G1–3. 6 Kumbh. ed. अन्योन्यस्य ( for °न्येन ). K4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 D2. 3. 5. 6. 8 अन्योन्य( B8 °न्ये ; Da3. a4 D5 °न्यं )विधिना त( D6 ग )तः. — c ) K7 विषयः ; M6 विषयं. ❀ Cn : विषयप्रतिसंहारम्, विषयादीनां प्रतीपं संहारं, विषयकारणीभूतेन्द्रियसंहारेणैव संहारम् ॥ Cs : विषयप्रतिसंहारम्, इन्द्रियाणां परिवर्तनम् । ❀ — d ) Dn4 इव ( for एव ).

16 V1 reads $16^{a}$–$22^{b}$ on marg. — a ) Da4 प्राणायानौ. Dn1 अथ ( for तथा ). K7 प्राणोपानौ तथोव्यानं. — b ) K7 समानो ; D4 समानां. K4. 6 M1 व्यान ; K7 दानम् ( for व्यानम् ). — c ) K4. 6 V1 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 M5 एवं तौ ; Bo. 6–9 M1. 6. 7 एकस्थान् ; D7 T G1–3. 6 एतांस्तौ ( for एवं तान् ). Ś1 K1. 2 न्यस्य ( for स्थाप्य ). K7 D4. 9 एतान्मनस्यवस्थाप्य. — d ) K1 दधतः. K7 D4. 9 प्राणयोर्दधतुर्मनः.

17 V1 reads 17 on marg. — a ) K7 D4. 9 उपस्थानकृतौ ; V1 °स्थितं कृतं ; Bo °स्थितौ कृतौ ; D7 T G1. 2 °स्थितकृती. B6 Da4 Dn1 D2 तौ च ; B8 च तौ ( for तत्र ). K6 Dn4 D3. 6. 8 Cnp उपस्थाप्योदरे तौ ( glossed, प्राणापानौ ) च ; B7. 8 (marg.). 9 Da3 (marg.) °स्थावुदरौ तौ च. ❀ Ca. s : उपस्थितकृतौ । उपस्थितमयत्नसिद्धं कृतं कर्तुमिष्टं ययोस्तौ ॥ Cn : उपस्थितं उपस्थं कुरुतस्तौ उपस्थितकृतौ, बद्धपद्मासनावित्यर्थः ॥ Cv : उपस्थितकृतौ उपस्थानकारणौ । ❀ — b ) K7 D4. 9 अथ ; B6. 8 Da3. a4 Ds2 T2 G2 M1. 6. 7 Cp अथो ( for अधो ). Dn1. n4 D2. 3. 6 भ्रुवोः. V1 D5 नासिकाग्रे तथा भ्रुवोः. ❀ Cn : भ्रुवोर्मध्ये आज्ञाचक्रे धारयतः । ❀ — D6 om. $17^{c}$–$18^{b}$. G1 om. $17^{c}$–$18^{d}$. — c ) K1 कुंकुण्यं ; K4 V1 Bo. 6–9 Da3. a4 Dn4 Ds D2. 3. 8 भ्रुकुट्या ; K6 भृकुट्या ; K7 D4. 9 कुकुण्योश्च ; B8 ( marg. ) Dn1 D5. 7 भ्रुकुट्यां ; T1 G3 कारुण्ये ; T2 भृकुट्याश्च ; G2 कारुण्यौ ; G6 नेतेग्रे ( sic ) ; M1. 5. 6 कुकुण्यौ ; M7 भ्रूमध्ये ( for कुङ्कुण्यां ). K7 D4. 5. 7. 9 हि मनस् ( for मनसा ). ❀ Ca : कुङ्कुणी ब्रह्मनाडी यामाहुः सुषुम्नेति । ❀ — d ) K1 स्मृतौ ; K6 Bo. 7–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 T G2. 3 M1. 5–7 तदा ; V1 च तौ ; B6 G6 तथा ( for स्म तौ ). K7 D4. 5. 7. 9 तदा धार( D5 °यं )यतां शनैः.

18 D6 om. $18^{ab}$ ; G1 om. 18 ( cf. v. l. 17 ). V1 reads 18 on marg. — b ) K7 स्थिरदृष्टिः ; T1 स्थिरां दृष्टिं ; G3. 6 M7 स्थिर( M7 °रं )दृष्टि-. — c ) K1. 6 Bo. 7. 8 ( marg. as in text ) Da3. a4 Dn1. n4 Ds T2 जितात्मानौ ; G2 °सिनौ ( for °सनौ ). B6. 9 D7 तथा वीरौ ; B8 ( marg. ) Da4 D5 M7 तथा धीरौ ; D4. 9 T G2. 3. 6 M5 समाधाय. — d ) K2. 4. 7 D4. 9 एव तु ; B6. 7. 8 ( marg. ) Da3. a4 आदधुः ( for एव च ). D5. 7 मूर्धन्या( D7 °न्य )दधतुर्मनः.

19 V1 reads 19 on marg. — a ) D7 [उ]चाल्य ; G1. 2 [उ]द्दाल्यं. G3. 6 तौ स्थितावथ चोत्थाय. ❀ Cn : तालुदेशं ब्रह्मरन्ध्रम् । ❀ — d ) M1. 6. 7 त्रिदिवेश्वरं ( for °वं तदा ). B6 D5 तथा ; B9 दिवा ( for तदा ).

C. 12. 7350
B. 12. 200. 21
K. 12. 198. 21

तज्ज्योतिः स्तूयमानं स्म ब्रह्माणं प्राविशत्तदा ॥ २०
ततः स्वागतमित्याह तत्तेजः स पितामहः ।
प्रादेशमात्रं पुरुषं प्रत्युद्गम्य विशां पते ॥ २१
भूयश्चैवापरं प्राह वचनं मधुरं स्म सः ।
जापकैस्तुल्यफलता योगानां नात्र संशयः ॥ २२
योगस्य तावदेतेभ्यः फलं प्रत्यक्षदर्शनम् ।
जापकानां विशिष्टं तु प्रत्युत्थानं समाधिकम् ॥ २३
उष्यतां मयि चेत्युक्त्वाचेतयत्स ततः पुनः ।
अथास्य प्रविवेशास्यं ब्राह्मणो विगतज्वरः ॥ २४
राजाप्येतेन विधिना भगवन्तं पितामहम् ।
यथैव द्विजशार्दूलस्तथैव प्राविशत्तदा ॥ २५
स्वयंभुवमथो देवा अभिवाद्य ततोऽब्रुवन् ।
जापकार्थमयं यत्नस्तदर्थं वयमागताः ॥ २६
कृतपूजाविमौ तुल्यं त्वया तुल्यफलाविमौ ।
योगजापकयोर्दृष्टं फलं सुमहदद्य वै ।
सर्वाँल्लोकानतीत्यैतौ गच्छेतां यत्र वाञ्छितम् ॥ २७

---

20 V1 reads 20 on marg. — a) K6 V1 Bo. 7. 8 Da3. a4 Dn1. n4 Ds2 D2. 3. 5–8 G2 तथा; B6. 9 Ds1 T1 G2 (*sup. lin.*) तदा (for ततो). — b) K6 B7 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 सर्वेषां (for सर्वा-सु). — cd) Ś1 K1. 2 स्म (K2 स्मा) यमानं स्म; K7 स्तूयमानस्य. D7 T G1–3. 6 M5 तु (for स्म). Ś1 K1 T1 M6 ब्राह्मणं. K7 D4 प्रविशत्; Da4 संवि°. V1 स्तूयमानं स्म ब्रह्माणं तज्ज्योतिः प्राविशत्तदा.

21 V1 reads 21 on marg. — b) K6 Da3 Dn1. n4 Ds2 D2. 3. 6. 8 प्रपितामहः; K7 M7 स पितामह. — c) ❀ Cs: प्रादेशमात्रं साङ्गुष्ठा प्रसारिता तर्जनी प्रादेशः। प्रादेशतालगोकर्णवितस्त्यः स्युर्यथाक्रमम् । तर्जन्यादिकनिष्ठान्ताः साङ्गुष्ठाः स्युः प्रसारिताः ॥ इति वैजयन्ती । ❀ — d) T2 प्रत्युद्यम्य.

22 V1 reads 22ab on marg. — b) T2 G2 M5 transp. वचनं and मधुरं. K4. 6. 7 Bo. 7–9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 तदा; V1 समः; B6 तथा; D7 T2 G1. 3. 6 ह्यजः (for स्म सः). — c) Ś1 K1 lacuna; K2 मद्विधैस् (for जापकैस्). — d) K1 योजनां; K7 D4 योगिनां.

23 b) G3 ·दर्शितं (for ·दर्शनम्). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 प्रत्यक्षं फलदर्शनं. — K6 V1 Bo. 6. 8. 9 Da3. a4 Dn1. n4 Ds2 D2. 3. 6. 8 repeat 23cd after 26ab. D5 reads 23c–26b twice. — c) D7 T G1–3. 6 वरिष्ठं (for विशिष्टं). — d) T1 प्रत्यस्थानम्. K6 (both times) V1 (second time) Bo 6–9 Da3. a4 Dn1. n4 Ds2 D2. 3. 5. 6. 8 (all [except B7] both times) समाहितं; K7 V1 (first time) D4. 9 समाधिक; D7 T G1–3. 6 M1. 5–7 इहाधिकं (M7 °कः) (for समाधिकम्).

24 For the repetition in D5, cf. v. l. 23. — a) K7 B9 उच्यतां; G3 इष्यतां. Da3. a4 Dn4 अपि (for मयि). D5 (both times) उष्यतामिति चैवोक्तं. — b) Ś1 K1. 2 B6. 8. 9 चेतयन्; K7 चिंतयन्; D4. 9 [अ]-चिंतयत् (for [अ]चे°). K6 V1 Bo Da3 Dn1. n4 Ds D2. 3. 6. 8 सततं; K7 D4. 5 (both times). 9 स पुनः (for स ततः). K4 पुमान् (for पुनः). D7 T G1–3. 6 M1. 5–7 व्याददे (G6 °धे) स ततो मुखं. — c) K4 V1 [आ]स्यं (for [अ]स्य). K1. 6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5 (both times). 6. 8 अथास्यं प्रविवेशास्य. — d) Ds1 ब्राह्मणे; D3 ब्रह्मणो.

25 For the repetition in D5, cf. v. l. 23. — a) Ś1 K1 तेन; T2 G1. 2 अनेन (for एतेन). — c) K2 अथैव. — d) K6 प्राविशस्.

26 For the repetition in D5, cf. v. l. 23. — a) D5 (both times) स्वायंभुवम्. — b) B6 तम्; D7 M1. 5–7 [इ]दम्; T1 G1–3. 6 वचो (for ततो). —After 26ab, K6 V1 Bo. 6. 8. 9 Da3. a4 Dn1. n4 Ds2 D2. 3. 6. 8 repeat 23cd. — c) V1 जापकानाम् (for °र्थम्). G1. 2 अहं (for अयं). — d) K6 V1 Bo. 6. 7. 9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 यदर्थं (Ds1 °र्थे); B8 तदर्थे; G1. 2 ततस्तं (for तदर्थं). K6 D3. 6. 8 स्वयम् (for वयम्).

27 a) D5. 7 कृतप्रज्ञाविमौ; T2 °पूजाविधौ; G3 °पूर्वाविमौ. K2. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 G3. 6 तुल्यौ. — b) V1 D5 M1. 5–7 तथा (for त्वया). D7 T1 G1–3. 6 तुल्यफलान्वितौ. Ś1 K1. 2. 4 ·बलाव् (for ·फलाव्). K7 D4 5. 9 इति; Dn1 विभो (for इमौ). — c) K6. 7 D9 योगि·. K1 सृष्टं; K7 D4. 7. 9 T G1–3 6 तुल्यं (for दृष्टं). — d) K1 अस्य (for अद्य). — e) K6 सर्वत्र· (hypermetric); K7 D4. 9 सर्वं· (for सर्वाँल्·). K4. 6. 7 Bo. 7–9 Da3. a4 Dn1.

ब्रह्मोवाच ।

महास्मृतिं पठेद्यस्तु तथैवानुस्मृतिं शुभाम् ।
तावप्येतेन विधिना गच्छेतां मत्सलोकताम् ॥ २८

यश्च योगे भवेद्भक्तः सोऽपि नास्त्यत्र संशयः ।
विधिनानेन देहान्ते मम लोकानवाप्नुयात् ।

गम्यतां साधयिष्यामि यथास्थानानि सिद्धये ॥ २९

भीष्म उवाच ।

इत्युक्त्वा स तदा देवस्तत्रैवान्तरधीयत ।
आमन्त्र्य तं ततो देवा ययुः स्वं स्वं निवेशनम् ॥ ३०

ते च सर्वे महात्मानो धर्मं सत्कृत्य तत्र वै ।
पृष्ठतोऽनुययू राजन्सर्वे सुप्रीतमानसाः ॥ ३१

एतत्फलं जापकानां गतिश्चैव प्रकीर्तिता ।
यथाश्रुतं महाराज किं भूयः श्रोतुमिच्छसि ॥ ३२

C. 12. 7364
B. 12. 200. 34
K. 12. 193. 34

इति श्रीमहाभारते शान्तिपर्वणि त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

---

n4 Ds D2–6 8. 9 अतिक्रम्य ; V1 B6 T2 M1. 5 अतिल्येतौ (for अतीत्यैतौ). — f) D5 M6 वांछितः.

28 Ds1. s2 (before corr.) ब्राह्मणः (for ब्रह्मा). — a) B3 (marg). 9 Cap महाश्रुतिं (for °स्मृतिं). K7 D4 9 जपेद् (for पठेद्). — b) Ś1 (before corr.) K2 D9 [अं]तः ; K7 T2 G3 6 M1. 6. 7 [अं]न· ; D7 T1 G1. 2 [ए]नां (for [अ]नु·). ❀ Ca : महास्मृतिर्गीतादिः, अनुस्मृतिर्विष्णुस्तोत्रादिः । यद्वा...महास्मृतिरन्यश्रवणयोग्यो जपः, अनुस्मृतिरुपांशुर्मानसो वा जपः । महाश्रुतिमनुश्रुतिमिति पाठे महाश्रुतिशब्देन गायत्र्युच्यते, अनुश्रुतिशब्देन चात्र ॐकारपूर्विकास्तिस्रो व्याहृतयः । Cs : महास्मृतिमेकमेकं वेदम् । अनुस्मृतिरुपनिषदावर्तनम् । इदं तु अर्थमवधास्यमानस्य फलम् ॥ Cv : महास्मृतिर्जापकब्राह्मणचरित्रस्मृतिर्महास्मृतिः । अनुस्मृतिः अनुकूलतया स्थितराजचरितस्य स्तुतिः । ❀ — c) D4 [अ]थ (for [अ]पि). D7 T G1–3. 6 मार्गेण (for विधिना). — d) S1 K1. 2. 4 तत्· (for मत्·). D2 गच्छेतां यत्र वाच्छत (sic).

29 a) K6 यद्यपोगे (for यश्च योगे). Da4 G6 लोके; M1. 5–7 योगाद् (for योगे). D7 T1 G1–3. 6 युक्तः (for भक्तः). — d) D7 T G1–3. 6 लोकम् (for लोकान्). — e) Ś1 K1 साधयिष्याम. K6 7 V1 Bo. 6–9 Da3 a4 Dn1. n4 Ds D2–6. 8 9 साधये (D5 शिवाय) गम्यतां चैव. — f) K2 स्वर्ग· (for यथा). Ś1 K1 lacuna for यथास्था·.

30 G3. 6 om. the ref. — a) Da4 इत्युक्ता. Ś1 K1. 2. 4 M7 ततो (for तदा). T1 reads from तदा up to ततो (in 30c) twice. K4 D4 9 G3. 6 देवांस्. — b) D4 ·धीयतं ; D9 ·धीयते. — c) K4. 6 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3 6–8 T1 (both times). 2 G1–3. 6 M1 च (for तं). D5 तदा ; G3. 6 तथा for ततो). G1 देव. — d) K7 निकेतनं (for निवेशनम्).

31 a) D8 तं (for ते). D9 महात्मानौ. — b) T1 सर्वं (for धर्मं). K6 संस्कृत्य ; D7 T1 G3 6 संस्तुत्य ; G1 संस्मृत्य. — c) D5 पृष्ठतोनु तदा ; G1. 2 °तोनुययौ ; G3. 6 °तोन्वययू. — d) Ś1 K1 2. 4 संप्रीतमानसाः ; K6 Bo. 7–9 Da3 a4 Dn1. n4 D2. 3. 6. 8 सुप्रीत( K6 °ति )चेतसः (for °मानसाः).

32 b) K6. 7 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–4. 6. 8. 9 [ए]षा ; D5 [ए]षां (for [ए]व). K6 Da4 प्रकीर्तितं (Da4 °तां) ; K7 D4. 5. 9 प्रदर्शिता (K7 D5 °ताः).

Colophon. — *Sub-parvan :* Ś1 K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1 n4 Ds D2–9 T G1–3. 6 M1. 5–7 मोक्षधर्म. — *Adhy. name :* Ś1 K1. 2. 4 6. 7 V1 Bo. 6–9 Da3. a4 Dn1 D2–9 T1 G1 3. 6 M1 5–7 जापकोपाख्यानं ; M1 5–7 (also) देवाभिगमनं. — *Adhy. no.* (figures, words or both) : B7 Dn4 D7 T1 G1. 3. 6 M1. 5–7 26 ; Dn1 27 ; D2. 8 25 ; T2 G2 40. — *Śloka no. :* Da4 Dn1. n4 D3 35.

# १९४

C. 12. 7365
B. 12. 201. 1
K. 12. 199. 1

युधिष्ठिर उवाच ।
किं फलं ज्ञानयोगस्य वेदानां नियमस्य च ।
भूतात्मा वा कथं ज्ञेयस्तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मनोः प्रजापतेर्वादं महर्षेश्च बृहस्पतेः ॥ २
प्रजापतिं श्रेष्ठतमं पृथिव्यां
देवर्षिसंघप्रवरो महर्षिः ।
बृहस्पतिः प्रश्नमिमं पुराणं
पप्रच्छ शिष्योऽथ गुरुं प्रणम्य ॥ ३
यत्कारणं मन्त्रविधिः प्रवृत्तो
ज्ञाने फलं यत्प्रवदन्ति विप्राः ।
यन्मन्त्रशब्दैरकृतप्रकाशं
तदुच्यतां मे भगवन्यथावत् ॥ ४
यदर्थशास्त्रागममन्त्रविद्भि-
र्यज्ञैरनेकैर्वरगोप्रदानैः ।
फलं महद्भिर्यदुपास्यते च
तत्किं कथं वा भविता क्व वा तत् ॥ ५
मही महीजाः पवनोऽन्तरिक्षं
जलौकसश्चैव जलं दिवं च ।

## 194

1 K1 om. 1. — $^{a}$) Ca ज्ञानयोग्यस्य (glossed by नष्टाभ्यासस्य). ❀ Cn : ज्ञानं विचारस्तत्सहितो योगो ज्ञानयोगः । ❀ — $^{b}$) M1 देवानां (for वेदानां). K6 वा (for च). — $^{c}$) M1 श्रुतात्मा; M7 श्रुत्वात्मा (for भूतात्मा). K6 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 च; M7 स (for वा).

2 $^{a}$) D7 T G3. 6 अत्रैव (for अत्रापि). — $^{c}$) D6 मनोः प्रजापतिर्वेदं.

3 $^{a}$) Ś1 K1. 2. 4 प्रजापतेः; D7 T G1-3. 6 M1. 5-7 °पतिः (T2 G1 M1. 6. 7 °ति-) (for °पतिं). T G3. 6 M1. 5-7 श्रेष्ठतमः (for °तमं). K6. 7 V1 Bo. 7. 8 (marg.). 9 Dn1. n4 Ds D2. 3. 5-8 T G1-3. 6 M1. 5-7 प्रजानां (for पृथिव्यां). — $^{b}$) T2 G1. 3 M1. 5-7 -प्रवरं; G2 -प्रवर्ष (for -प्रवरो). D5. 7 T G1-3. 6 M1. 5-7 महर्षिं (for °र्षिः). — $^{c}$) B6 D7 T1 G1. 3. 6 M1. 5-7 बृहस्पतिं (for °स्पतिः). B7. 8 (marg. as in text) Da3. a4 Dn1 प्रश्नमिदं; G1 अग्निमिमं; M7 प्राज्ञतमं (for प्रश्नमिमं). — $^{d}$) Da4 यत्तप्रच्छ (for पप्रच्छ). B6 (marg. as in text) मनुं; D5 मुनिं (for गुरुं).

4 $^{a}$) M7 यं (for यत्-). K4. 6 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 यत्र विधिः (Ds2 °धि-); K7 D5. 7 T G1-3. 6 M1. 5-7 मंत्रविधि- (for °विधिः). Ds1 D7 T G1-3. 6 M1. 5-7 -प्रयुक्तं (for प्रवृत्तो). — $^{b}$) Ds1 D5 ज्ञानं; G2 जाने (for ज्ञाने). D7 T1 G1. 2 यच्च (for यत्प्र-). D7 विदंति (for -वदन्ति). — $^{c}$) Bo तन् (for यन्). D7 -प्रकारं; T1 G1. 2 -प्रशांतं (for -प्रकाशं). — $^{d}$) V1 Bo Dn4 भगवान् (for भगवन्).

5 K7 om. (hapl.) 5. — $^{a}$) K4. 6 Bo. 7-9 Dn1. n4 Ds D2. 3. 6. 8 यच्चार्थ-; D5 यस्त्वर्थ-; D7 T G1-3. 6 M1. 5-7 यस्तोत्र- (for यदर्थ-). V1 -शास्त्रागत-; D7 (before corr.) -शस्त्रगम-; T G1. 3. 6 M5. 7 -शास्त्रग्रह-; G2 -शब्दग्रह-; M1. 6 -शास्त्रग्रह- (for -शास्त्रागम-). G3 M7 -मंत्रवद्भिर्; G3. 6 °वाग्भिर् (for °विद्भिर्). ❀ Ca. n. 8 : अर्थशास्त्रं त्रिवर्गशास्त्रम् । ❀ — $^{b}$) K6 B6-9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 अथ; V1 Bo D4. 5. 7. 9 T G1-3. 6 M1. 5-7 धन- (for वर-). — $^{c}$) Ś1 K1. 2. 4 महर्षिर् (for महद्भिर्). D7 T G1-3. 6 यदवाप्यते (for यदुपास्यते). D4. 9 तत् (for च). — $^{d}$) K6 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 किं तत् (by transp.); D4. 9 किं वा; G2 तं किं. B9 फलं (for कथं). Ś1 K1. 2. 4. 6 भवति (for भविता). D2 यथावत्; D8 क्व तावत् (for क्व वा तत्).

6 $^{a}$) D2 om. मही. D9 (marg.) महीध्राः (for °जाः). K7 V1 Bo. 6-9 D7 M1. 7 पवनोंतरीक्षं. — $^{b}$) K7 जलौकशश्च; D8 नभौकसश्च (for जलौ°). K2 transp. जलं and दिवं. D7 T G1-3. 6 M1. 5-7 जलौकसोग्निश्च जलं तथा द्यौः. — $^{c}$) K4. 6. 7 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2-6. 8. 9 M1. 5-7 चापि (for चैव). B8 (marg.) प्रवृत्तास्; Dn1 प्रभूतास् (for प्रसू°). — $^{d}$)

दिवौकसश्चैव यतः प्रसूता-
स्तदुच्यतां मे भगवन्पुराणम् ॥ ६
ज्ञानं यतः प्रार्थयते नरो वै
ततस्तदर्था भवति प्रवृत्तिः ।
न चाप्यहं वेद परं पुराणं
मिथ्याप्रवृत्तिं च कथं नु कुर्याम् ॥ ७
ऋक्सामसंघांश्च यजूंषि चाहं
छन्दांसि नक्षत्रगतिं निरुक्तम् ।
अधीत्य च व्याकरणं सकल्पं
शिक्षां च भूतप्रकृतिं न वेद्मि ॥ ८

स मे भवाञ्शंसतु सर्वमेत-
ज्ज्ञाने फलं कर्मणि वा यदस्ति ।
यथा च देहाच्च्यवते शरीरी
पुनः शरीरं च यथाभ्युपैति ॥ ९
मनुरुवाच ।
यद्यत्प्रियं यस्य सुखं तदाहु-
स्तदेव दुःखं प्रवदन्त्यनिष्टम् ।
इष्टं च मे स्यादितरच्च न स्या-
देतत्कृते कर्मविधिः प्रवृत्तः ।
इष्टं त्वनिष्टं च न मां भजेते-

C. 12. 7376
B. 12. 201. 11
K. 12. 199. 11

K2 om. मे. K7 V1 M5 भगवान्.

7 a) T2 ज्ञातुं (for ज्ञानं). K6 च यत्; V1 B6 (marg. as in text). 8 (marg.) ततः; B8 (also marg.) Da3. a4 D6 Ca तु यत्; D7 T G1–3. 6 M1. 5–7 महत् (for यतः). D5 नराणां (for नरो वै). K4 ज्ञानायते प्रार्थयते नरैव (sic). — b) D7 तदा समर्था भवति. K1. 2 यतस् (for ततस्). G1. 2 तदा सा; G3. 6 M1 तदार्था (for तदर्था). K2 भवतिः; K4 °ती. — c) D7 T G1–3. 6 M1. 5–7 चेदहं (for चाप्यहं). D7 T G1–3. 6 वेद्मि (for वेद). — d) V1 reads from मिथ्या up to व्याकरणं (in 8c) on marg. G1 -प्रवृत्तिश्च. D5 न; D7 तु (for च). Ś1 K1. 2. 4 वि(K4 हि)कुर्यात्; K7 B7. 8 (marg.) Da3. a4 D4. 7. 9 T G1–3. 6 M7 न कुर्यां; B6 प्रकुर्यां; Dn4 D5 न (D5 च) कुर्यात्; M1. 5 नु कुर्यात् (for नु कुर्याम्).

8 V1 reads up to व्याकरणं on marg. — a) K6 अकाम- (for ऋक्साम-). Ś1 K1. 2 -संगांश्च; K7 D5 T2 G1. 2 -संघाश्च (for -संघांश्च). K4 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 चापि; D4 वाहं (for चाहं). — b) V1 न क्षेत्रं (for नक्षत्र-). K6 D3. 6. 8 T2 G6 -गतिर्; T1 -गतीर् (for -गतिं). ❀ Ca: छन्दांसि छन्दोविचितिम् । ❀ — c) K2 lacuna; Ds2 (before corr.) स; M1. 5. 6 चेद् (for च). — d) K7 D4. 9 शिष्यांश्च; D7 G2 M7 शीक्षां च (for शिक्षां च). Ś1 (*sup. lin.*) K1 B8 (marg.) वेद- (for भूत-). K4 वेत्ति (for वेद्मि).

9 a) K1 भावं; K2 भावान्. K4 Da3. a4 तावद् (for सर्वम्). — K6 B0. 6–9 Da3 Dn1. n4 Ds D2. 3. 5. 6. 8 Cn ins. after 9a: K7 D4. 9 after 9:

531* सामान्यशब्दैश्च विशेषणैश्च ।
स मे भवाञ्शंसतु तावदेतत्.

[(L. 1) Da3 विशेषणश्च. — Da3 om. line 2. — (L. 2) B9 Dn1 सर्वम्; Dn4 यावद् (for ता°). K7 D4. 9 सर्वं च मे क(K7 त्वमेतत्क)थय त्वं यथावत्.]

— b) D4 ज्ञान-; M7 स्वज्ञाने (for ज्ञाने). D7 T1 G1–3. 6 फले (for फलं). B9 यावदस्ति; D7 G1. 2 वा यदेति; T1 G3. 6 वा वदंति; T2 वारयंति (for वा यदस्ति). — c) Dn1 तथा च; G3. 6 यथा हि (for यथा च). D5 om. च. Ś1 देहांस्; K1 देहास् (for देहाच्). Ś1 K1. 2. 4 त्यज(K1 °ज्य)ते (for च्यवते). — d) Ś1 K1. 2 मुनेः (for पुनः). Da4 तु (for च). Da4 G3. 6 तथा (for यथा). B6 G3. 6 [अ]प्युपैति; D5 ह्यपैति (for [अ]भ्यु°). — After 9, B6 D5 read 11cd for the first time, repeating it in its proper place.

10 M7 om. the ref. D7 T G1–3. 6 बृहस्पतिः (for मनुः). — a) M7 प्रियो (for प्रियं). K7 तस्य; B9 यच्च (for यस्य). Da3 Ds1 यदाहुस्; Dn4 lacuna (for त°). — b) B8 (marg.) द्वेष्यं तदेव (for तदेव दुःखं). — c) Ś1 (orig.) K2. 4 Da4 D4. 9 द्वृदं (for इष्टं). G1 om. च. K1. 2 T इतरश्च; V1 B0. 6. 8 (marg. as in text). 9 Da4 D5. 7 G2. 6 °रं च (for °रच्च). — d) K7 -कृतं; G3 च मे (for -कृते). K1 G3 -विधि- (for -विधिः). G6 -प्रवृत्तिः. — After 10cd, B6–9 D7 T G1–3. 6 M1. 6. 7 ins. 532*, while Da3. a4 ins. lines 1–4 of 532*. The sequence of M5 after

C. 12. 7375
B. 12. 201. 11
K. 12. 199. 11

त्येतत्कृते ज्ञानविधिः प्रवृत्तः ॥ १०
कामात्मकाश्छन्दसि कर्मयोगा
एभिर्विमुक्तः परमश्नुवीत ।
नानाविधे कर्मपथे सुखार्थी
नरः प्रवृत्तो न परं प्रयाति ।
परं हि तत्कर्मपथादपेतं

$10^{cd}$ is: $11^{cd}$, lines 5–6 of 532*, $11^{ef}$, lines 1–4 of 532*, $11^{ab}$, $11^{cd}$ (r), $11^{ef}$ (r), 532* (r). B6.7.9 M1.5–7 om. $10^{ef}$; D7 T G1–3.6 om. $10^{e}$–$11^{d}$. B8 reads $10^{e}$–$11^{d}$ after line 4 of 532*. — $^{e}$) K4 तु निष्टं. Ś1 K1 मा; K3 सा (for मां). — $^{f}$) K6 त्वेतत्-; D5 एतत्-.

11 For the sequence in M5, cf. v. l. 10. D7 T G1–3.6 om. $11^{abcd}$ (cf. v. l. 10). B6.9 read $11^{ab}$ and B7.8 M7 read $11^{abcd}$ after line 4 of 532*. Da3 Dn1.n4 D2 repeat $11^{ab}$ after line 4 of 532*. M1.5.6 read $11^{abcd}$ (repeating $11^{cd}$) after line 4 of 532*. — $^{a}$) B6.9 D5 M1.5.6 कामात्मकं; B7 °र्थकं; Da3 (both times) °त्मकश्; M7 °त्मतश् (for °त्मकाश्). B6.7.9 Da4 Dn1.n4 D2 (last three second time) M7 Cap छंदति (for °सि). Ś1 K1.2.7 V1 कामयोगाद्; B6.7.9 Dn1.n4 D2 (last three second time) कर्मयोग; Da3 (both times) lacuna; D8 मृत्युयोगा; D4.9 काम°; M1.5–7 कर्मयोगाद् (for °योगा). — $^{b}$) Ś1 K1.2 D4 वियुक्ताः; M1.5–7 वियुक्तः (for विमुक्तः). Ś1 K1.2.4 अश्नुवंति; K7 °वतः; B6.7.9 Da3 (both times).4 Dn1.n4 D2 (last three second time).5 आददीत; D4.9 अश्न( D9 °श्न )वेदः; M7 आविशेत (for अश्नुवीत). — After $11^{ab}$, Da3.4 D5 ins. lines 5–6 of 532*. B9 om. $11^{cd}$. B8 D5 read $11^{cd}$ for the first time after 9. B7.8 read $11^{cd}$ for the first time after line 4 of 532*. — $^{c}$) B7 (first time) damaged. K7 B8 (first time).7.8 (last two second time) Da3.4 D4.5 (first time).9 नानाविधैः; M1.5–7 (all both times) नानापथे (for °विधे). Ś1 K1.2 B8 (first time) कर्मफले; K4 °फली; K7 B6 (first time).7.8 (last two second time) D6 (first time) °फलैः (for °पथे). M7 (both times) सुखं हि (for सुखार्थी). — $^{d}$) K6 B6.7.8 (last two first time) नित्यं (for न परं). B7.8 (both second time) प्रपद्येत् (for प्रयाति). — K6.7 V1 B6 Dn1.n4 D5 D2–4.6–9 Cn.8 ins. after $11^{cd}$: B6–9 T G1–3.6 ins. after $10^{cd}$; Da3.4 ins. lines 1–4 after $10^{cd}$; Da3.4 D6 ins. lines 5–6 after $11^{ab}$: M1.6.7 ins. lines 1–4 after $10^{cd}$ and repeat the same with lines 5–6 after 11: M5 ins lines 5–6 after $11^{cd}$ and lines 1–4 after $11^{ef}$ and repeats after the repetition of $11^{ef}$:

532* बृहस्पतिरुवाच ।
इष्टं त्वनिष्टं च सुखासुखे च
साशीस्त्ववच्छन्दति कर्मभिश्च ।
मनुरुवाच ।
एभिर्वियुक्तः परमाविवेश
एतत्कृते कर्मविधिः प्रवृत्तः ।
आत्मादिभिः कर्मभिरिध्यमानो [5]
धर्मे प्रवृत्तो द्युतिमान्सुखार्थी ।

[ K6.7 B6.7 Da3.4 D4.5.7.9 T G1–3.6 M7 (both times) om. the ref. V1 D6 om. lines 1–4. — (L. 1) K7 D4.9 प्रजा; Da4 इदं (for इष्टं). D4 त्वनिष्टे; D7 G1.3 चानिष्टं; T1 G2 च निष्टं; M1.5–7 (all second time) च दिष्टं (for त्वनिष्टं). D7 T G1–3.6 M1.5–7 (last four both times) शुभाशुभे (for सुखासुखे). — After line 1, K7 D4.9 read for the first time $11^{ef}$, repeating it in its proper place. — (L. 2) K7 D4.9 त्ववकर्मभिश्; B6.6.8 D6 त्वत( B6 °व )श्छंदति; B9 Da3.4 ततश्छंदति; D8 तपश्छंदति; D7 T G1.3.6 तपश्छंदसि; D8 त्वरच्छंदति; G2 M5.7 (last two both times) तवैश्छंदसि; M1.6 (both both times) तवैच्छंदति (for त्वव°). K7 सश्चद*; D4.9 छंदसश्च; D7 T1 G3.6 कर्मवच्च; T2 कर्मयश्च (for °भिश्च). — Some MSS. om. the ref. — (L. 3) B6 D7 T1 G1–3.6 एतैर् (for एभिर्). B6–8 Da3.4 Dn1.n4 D8 D2.3.6–8 T1 G2 विमुक्तः; M7 (first time) विषक्तः (for वियुक्तः). K7 D4.9 आविशेत्तद्; Da4 आददीत; Ds2 T G1–3.6 M1.5.6 (last three both times).7 (first time) आविशेत; M7 (second time) आविशेते (for आविवेश). — (L. 4) Da3.4 यत्तत्-; D7 T G1–3.6 M7 (first time) नैतत्-; M1.5.6 (all both times) इत्येतत्-; M7 (second time) चैतत्- (for एतत्-). B6 ज्ञान- (for कर्म-). T2 G3.6 -विधिप्रयुक्तं; M7 (first time) -विधिं प्रवृत्तं (for -विधिः प्रवृत्तः). — B6–9 M1.5–7 read $11^{ab}$ (B7 M7 $11^{abcd}$; B8 $10^{e}$–$11^{d}$) after line 4; while Da3 Dn1.n4 D2 repeat $11^{ab}$ after line 4. — (L. 5) B6 (marg.).7–9 Da3.4 नानाविधैः (for आत्मादिभिः). V1 वध्यमानो; B9 अध्य°; D7 T1 G3.6 Csp ईक्ष्य°; T2 इज्य°; G1.2 ईक्ष्यमाना; M1.5 (both times).6 तृप्यमानो; M7 उह्य°; C8 अर्य° (for इध्य°). — (L. 6) B9 धर्मप्रवृत्तो; D7 T1 G1 M5 (both times).7 धर्मेषु वृत्तो; T2 G3.6 धर्मेषु युक्तो; G2 धर्मेषु स्थितो (for धर्मे प्रवृत्तो). K7

निराशिषं ब्रह्मपरं ह्यवश्यम् ॥ ११
प्रजाः सृष्टा मनसा कर्मणा च
द्वावप्येतौ सत्पथौ लोकजुष्टौ ।
दृष्ट्वा कर्म शाश्वतं चान्तवच्च
मनस्त्यागः कारणं नान्यदस्ति ॥ १२
स्वेनात्मना चक्षुरिव प्रणेता
निशात्यये तमसा संवृतात्मा ।
ज्ञानं तु विज्ञानगुणेन युक्तं
कर्माशुभं पश्यति वर्जनीयम् ॥ १३
सर्पान्कुशाग्राणि तथोदपानं
ज्ञात्वा मनुष्याः परिवर्जयन्ति ।
अज्ञानतस्तत्र पतन्ति मूढा
ज्ञाने फलं पश्य यथा विशिष्टम् ॥ १४
कृत्स्नस्तु मन्त्रो विधिवत्प्रयुक्तो
यज्ञा यथोक्तास्त्वथ दक्षिणाश्च ।
अन्नप्रदानं मनसः समाधिः
पञ्चात्मकं कर्मफलं वदन्ति ॥ १५
गुणात्मकं कर्म वदन्ति वेदा-
स्तस्मान्मन्त्रा मन्त्रमूलं हि कर्म ।
विधिर्विधेयं मनसोपपत्तिः
फलस्य भोक्ता तु यथा शरीरी ॥ १६
शब्दाश्च रूपाणि रसाश्च पुण्याः
स्पर्शाश्च गन्धाश्च शुभास्तथैव ।
नरो नसंस्थानगतः प्रभुः स्या-

C. 12. 7286
B. 12. 201. 20
K. 12. 199. 21

---

D2. 3. 8 सुखार्थैः; D6 सुखार्थे. ]

— K7 D4. 9 read for the first time 11cf after line 1 of 532*. — c) G1 परा; G3. 6 पदं (for परं). Da4 D5 यत (for तत्). K7 D4. 9 (all first time) M7 (second time) कर्मफलाद्; Bo °पदाद्; B7 °सुखाद्; D5 °पथान् (for °पथाद्). K7 D4. 5. 9 (all [except D5] second time) G1 अपेतो (G1 °ता); Da3. a4 अपेतान्; T2 अपेति (for °तं). — f) M7 ब्रह्मपरा. K4 ह्यपश्यं; K6 सुवेद्यं; K7 (second time) B6–9 Dn1. n4 D4 (second time). 5. 9 (second time) M7 (first time) ह्युपैति; K7 (first time) V1 Bo. 6 (marg.) Da3. a4 Ds D2. 3. 4 (first time). 6. 8. 9 (first time) ह्यवेद्यं (for ह्यवश्यम्). D7 T G1–3. 6 M1. 5. 6. 7 (second time) निराशिषो (T2 °शिरो; G2 °शिषं) यत्पदमाप्नुवंति.

12 a) K2 Dn4 सृष्ट्वा (for सृष्टा). Ś1 K1. 2 वा (for च). ❀ Ca: मनसा मनोव्यापारप्रधानतया सृष्टाः सनत्कुमारादयः....ध्यानादौ रताः। यास्तु कर्मव्यापारप्राधान्येन.... सृष्टास्ताः कर्मणि यागादौ रताः। ❀ — b) K6 Bo D4. 6 द्वावेतौ; K7 B6. 7. 9 Dn1. n4 Ds D2. 3. 8. 9 M1. 5–7 द्वावेवैतौ (for द्वावप्येतौ). K1 (*sup. lin.* as in text) लोकतुष्टौ; K6 °दृष्टौ (for °जुष्टौ). — c) K6 V1 Bo. 6 (marg. as in text). 7. 8 (marg. as in text). 9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 दृष्टं; D7 T G1. 2 दुष्टं (for दृष्ट्वा). D7 T G1–3. 6 [अ]शाश्वतं (for शा°). Ś1 K1. 2. 4 चांतकं च; D4 वांतवच्च. — d) D7 T G1–3. 6 M1. 5–7 मनस्त्यागे (for °स्त्यागः). T2 G3. 6 नात्र वेद्मि (for नान्यदस्ति). ❀ Ca: मनस्त्यागो मनसा कर्मणस्त्यागो न तु मनस एव त्यागः। ❀

13 a) T1 स्वेनात्मा (for °त्मना). Ś1 K1 प्रणीता; K7 D4. 9 [अ]प्रणेता (for प्र°). — c) D4 नु (for तु). D7 T1 G1–3. 6 -गुणोपपन्नं (G1 °न्नः); M7 -गुणोपयुक्तं (for -गुणेन युक्तं).

14 a) Ś1 K2. 4 सर्पाः; D7 T G1. 3. 6 सर्वान् (for सर्पान्). K7 तदोदपानं; Bo तथोपदानं (for तथोदपानं). ❀ Cs: कुशाग्राणि कुशाग्रप्रभृतीनि तीक्ष्णधाराणि। ❀ — c) D6 अविज्ञातस् (for अज्ञानतस्). K4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 केचिज् (for मूढा). — d) Ds1 ज्ञानं (for ज्ञाने). D3 तथा (for यथा). G1 [अ]वशिष्टं; G3 विशिष्टः.

15 a) G3. 6 कृत्स्नश्च; M7 कृत्स्नं तु. M7 मंत्रे. D7 T1 G1. 2 कृत्स्नाश्च मंत्रा विधिवत्प्रयुक्ता. — b) D4. 5 यज्ञो; D7 G1. 2 यथा (for यज्ञा). K4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 M1. 5–7 स्विह; D7 T G1–3. 6 सह (for स्वथ). — c) K7 M7 मनसाः; T1 च मनः-. D5 समाधेः. ❀ Ca: पञ्चात्मकम् मन्त्रविधिद्रव्यर्त्विग्यजमानेति पञ्चकारणसमुत्थम्। ❀

16 a) Ds D7 T G1–3. 6 M1. 5–7 गुणागुणं (for °त्मकं). B6. 8. 9 Da3. a4 -फलं वदंति; D5 विदंति वेदास् (for वदान्ति वे°). — b) D7 T1 G1–3 तेभ्यो (for तस्मान्). K4. 6. 7 V1 Bo Dn1. n4 Ds D2–6. 8. 9 G6 M1. 5–7 मंत्रो; B7 lacuna; G1 वेदा (for मन्त्रा).

C. 12. 7385
B. 12. 201. 20
K. 12. 199. 21

देतत्फलं सिध्यति कर्मलोके ॥ १७
यद्यच्छरीरेण करोति कर्म
शरीरयुक्तः समुपाश्नुते तत् ।
शरीरमेवायतनं सुखस्य
दुःखस्य चाप्यायतनं शरीरम् ॥ १८
वाचा तु यत्कर्म करोति किंचि-
द्वाचैव सर्वं समुपाश्नुते तत् ।
मनस्तु यत्कर्म करोति किंचि-
न्मनःस्थ एवायमुपाश्नुते तत् ॥ १९
यथागुणं कर्मगणं फलार्थी
करोत्ययं कर्मफले निविष्टः ।
तथा तथायं गुणसंप्रयुक्तः
शुभाशुभं कर्मफलं भुनक्ति ॥ २०
मत्स्यो यथा स्रोत इवाभिपाती
तथा कृतं पूर्वमुपैति कर्म ।
शुभे त्वसौ तुष्यति दुष्कृते तु
न तुष्यते वै परमः शरीरी ॥ २१
यतो जगत्सर्वमिदं प्रसूतं
ज्ञात्वात्मवन्तो व्यतियान्ति यत्तत् ।
यन्मन्त्रशब्दैरकृतप्रकाशं
तदुच्यमानं शृणु मे परं यत् ॥ २२
रसैर्वियुक्तं विविधैश्च गन्धै-

---

K6.7 V1 B7 Dn1. n4 D8 D2–6. 8. 9 T2 M1. 5–7 मंत्रपूर्वं (for °मूलं). B6. 8. 9 Da3. a4 वेदास्तस्मान्मंत्रपूर्वं हि कर्म. — c) Ś1 K1. 2 विधेयो (for °यं). K7 [उ]त्पात्तिः (sic); T [उ]पपन्नं (for °पत्तिः). — d) G1. 2 फलोपभोक्ता (for फलस्य भोक्ता). D4 G3 नु; D7 T G1. 2 च (for तु). K4. 6 V1 B0. 7–9 Da3. a4 Dn1. n4 D8 D2. 3. 5–8 T G1–3. 6 M1. 7 तथा (for यथा).

17 a) Ds1 शब्दश्. — b) G3 स्वर्गाश् (for स्पर्शाश्). — c) Ś1 K1. 2 रसो (for नरो). Ś1 K1. 2. 4. 7 B6 Da3. a4 D4. 9 [ऽ]रसः; V1 [ऽ]रसं; D8 T2 M5. 7 रहः; D5 lacuna; D7 G1. 2 गतः; T1 रथे; G3. 6 रथः (for नसं-). Ś1 (*sup. lin.*) -वतः; D6 -मतः (for -गतः). ❀ Ca: रसस्थानगतः रागाभिच्छितः ॥ Cn: नसंस्थानगत इत्येकं पदम् । मरणमप्राप्तो जीवन्नेव स्यात् । ❀ — d) Ś1 K1. 2. 4. 7 V1 D4. 9 कर्मणि स्यात्; B3 (marg.) D7 T G1–3. 6 M1. 5–7 °णोस्य; D5 °णा ध्रुवं (for कर्मलोके).

18 b) D8 -मुक्तः (for -युक्तः). D5 समुपासते (for °श्नुते). — $18^{cd}$ = 12 461*, lines 1–2. M5 om. (hapl.) $18^{c}$–$19^{b}$. — d) K1 दाप्यायतनं; D4 वाप्या°; M7 चास्या°.

19 M5 om. $19^{ab}$ (cf. v. l. 18). — a) Da4 D4 नु; D5. 7 T1 G1–3. 6 च (for तु). M6 तत् (for यत्). — K2 om. (hapl.) $19^{bc}$. — b) Ś1 K1. 4. 7 D4. 5. 9 वागेव; D6 तदेव (for वाचैव). — c) D5 तत् (for यत्). K7 om. (hapl.) from करोति up to कर्म (in $20^{a}$). — d) D7 T1 G1–3. … M… मनःस्थम्; T2 °स्तद् (for मनःस्थ). D7 T G1–3. 6 एवेदम् (for एवायम्).

20 K7 om. up to कर्म (cf. v. l. 19). — a) K6 V1 B0. 6. 7. 8 (marg. as in text) Da3. a4 Dn1. n4 D8 D2. 3. 5. 6. 8 यथा यथा (for यथागुणं). K4. 7 V1 B0. 6–9 Da3. a4 Dn1. n4 D8 D2–9 T G1–3. 6 M1. 5–7 Cn. s -गुणं; K6 -गुणान् (for -गणं). B9 फलार्थं; Da4 फलार्थि. — b) K4 यत् (for अयं). K7 D4. 9 कर्मगुणे; T G1–3. 6 M7 °पथे (for °फले). Ś1 K1. 2 विविष्टः (for निविष्टः). — c) D5 T2 तथा यद् (for तथायं). D5 गुणसंप्रयुक्तं; D7 T G1–3. 6 M1. 5–7 °वत्प्रयुक्तः (M7 °क्त). — d) D7 T G1–3. 6 M1. 5–7 स भुंक्ते (for भुनक्ति).

21 a) K6. 7 Ds1 D4. 6. 9 श्रोत (for स्रोत). K1 M5. 6 [अ]तिपाती; K7 D4. 6. 9 T G1–3. 6 [अ]भियाति; Da3 ** पाती (for [अ]भिपाती). — b) G3. 6 पुण्यम् (for पूर्वम्). ❀ Ca: कृतं कर्तारम् । ❀ — c) G1 [ऽ]ति (for तु). Ś1 K1. 2 D4. 9 तिष्ठति (for तुष्यति). K6 दुष्कृतेषु; K7 D3. 4. 9 °ते च (for °ते तु). — d) M1. 5. 6 दुष्यते (for तु°). K7 D4. 9 [ऽ]सौ (for वै). K4 शरीरे. ❀ Ca: परमः शरीरी क्षेत्रज्ञ ईश्वरः । ❀

22 a) Ś1 K1. 2. 4 ततो; M7 यथो (for यतो). K1 पूर्वम् (for सर्वम्). — b) K2 ज्ञानात्मवंतो; K7 D4. 9 ज्ञानात्मना (D9 °ज्ञा)तो (for ज्ञात्वात्मवन्तो). Ś1 K1. 2 ह्यभियांति; K4 व्यधि°; B3 (marg.) Da3. a4 Dn1 ह्य (Ds1 व्य) भियंति; Dn1 व्यभियांति; Ds1

रशब्दमस्पर्शमरूपवच्च ।
अग्राह्यमव्यक्तमवर्णमेकं
पञ्चप्रकारं ससृजे प्रजानाम् ॥ २३
न स्त्री पुमान्वापि नपुंसकं च
न सन्न चासत्सदसच्च तन्न ।
पश्यन्ति यद्ब्रह्मविदो मनुष्या-
स्तदक्षरं न क्षरतीति विद्धि ॥ २४

इति श्रीमहाभारते शान्तिपर्वणि चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

## १९५

मनुरुवाच ।
अक्षरात्खं ततो वायुर्वायोर्ज्योतिस्ततो जलम् ।
जलात्प्रसूता जगती जगत्यां जायते जगत् ॥ १
इमे शरीरैर्जलमेव गत्वा
जलाच्च तेजः पवनोऽन्तरिक्षम् ।
खाद्वै निवर्तन्ति नभाविनस्ते
ये भाविनस्ते परमाप्नुवन्ति ॥ २
नोष्णं न शीतं मृदु नापि तीक्ष्णं

C. 12 7396
B. 12. 202. 3
K. 12. 200. 3

---

[s]ध्यधियंतिं; D4.9 [s]ध्यधि( D9 °भि )यांति; D5 [s]ध्यप्रयंति; D6 व्यतियंति; D7 T G1–3.6 M1.5–7 [s]भ्यु( M1.5–7 °भ्यु )पयांति (for व्यति°). Ś1 K1.2 D4.9 यांतं; K7 यांति; D8 यस्मात्; D7 T G1–3.6 M1.5–7 शांतिं (for यत्तत्). — c) D7 T1 G1.2 -प्रकारं (for -प्रकाशं).

23 a) K6 Bo.6–8 Da3.a4 Dn1.n4 Ds D2.3.5.6.8 विमुक्तं; D7 T1 G1 विविक्तैर्; G2 विमुक्तैर् (for वियुक्तं). — b) Ś1 K1.2 अरूपदं च (for °वच्च). — c) G3 अगृह्यम् (for अग्रा°). Da4 अनंतम् (for अवर्णम्). — d) K6 V1 Bo.6.7.9 Dn1.n4 D2.3.5.8 -प्रकारान्; D6 -प्रकाशं (for °रं). K7 V1 B6.8 (marg. as in text) D5.6 M5.7 सृजते; D7 T G1–3.6 सृजति (for ससृजे). ❀ Cs: पञ्चप्रकारं पञ्चभूतात्मकम् । ❀

24 a) Ś1 K1.2.4.7 B6.8.9 Da4 D4.9 T2 G3 M1.5–7 वा न; K6 V1 Bo.7 Da3 Dn4 Ds D2.3.6.8 नापि; Dn1 नाति- (for वापि). V1 Ds1 D4.7 T G1–3.6 M1.5–7 वा (for च). — b) K6 V1 D5 M1.5.6 वासत्; G1.2 चासन् (for चासत्). K1.2.6 Da4 Dn4 Ds1 D4 तत्र; D6 तत्तत्; G2 तं च (for तन्न). — d) K4 Da3.a4 Ds1 D2.6.8 क्षरंति.

Colophon. —*Sub-parvan:* Ś1 K1.2.4.6.7 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2–9 T G1–3.6 M1.5–7 मोक्षधर्म. —*Adhy. name:* Ś1 K1.2.4.6.7 V1 Bo.6–9 Da3.a4 Dn1 Ds2 D2–4.6.8.9 मनुबृहस्पतिसंवादः; Ds1 D5 बृहस्पतिसंवादः; M1.5–7 मनुबृहस्पतिसंवादे शरीरफल( M7 om. फल )भोक्तृत्वविधिः. —*Adhy. no.* (figures, words or both): Dn1 28; Dn4 Ds D7 T1 G1.3.6 M1.5–7 27; D2.8 26; T2 G2 41. —*Śloka no.:* Da4 Dn4 D8 27; Dn1 29.

### 195

1 D7.8 T G1–3.6 M1.5–7 बृहस्पतिर् (for मनुर्). — a) K1 om. ततो. — b) K1 वायुर्; Dn1.n4 D2 ततो (for वायोर्). D7 T1 G1–3.6 तथा (for ततो). — d) Da4 (before corr.) D4.9 G1 जगत्या.

2 a) K6.7 Bo.6.7.8 (marg. as in text) Da3.a4 Dn1.n4 D2.3.6.8 एतैः; D5 इदं (for इमे). K2 शरीरा; D4 °रे; D5 °रं (for °रैर्). Ś1 K1.2.4 गंधा (sic); D5 मत्त्वा (for गत्वा). ❀ Cv: शरीरैः भस्मीभूतशरीरैः । ❀ — b) K1.4 जलाद्. D4 तेजाः. K7 V1 Bo 6.7.9 पवनोंतरीक्षं; D5.7 °नं य( D7 °नाद्य )था खं; T G1–3.6 °नांतरिक्षं (T2 G3.6 °क्षे). — c) D5 स्याद् (for खाद्). D6 न च; M1.7 Cv च (for न-). K1 -भाविनास्; D9 -भावितस् (for °नस्). ❀ Cn: भाविनः, भावोऽक्षरं तद्येषामात्मत्वेनास्ति ते । ❀ — d) K6 Bo.7.8 (marg. as in text) 9 Dn1.n4 Ds D2.3.6 8 मोक्षं च ते वै; D7 यथाविनस्ते (sic); Cnp ये भाविनस्ते (as in text). D9 आप्नुवंति (for आप्नु°). G6 तद्वै पदं मुख्यमवाप्नुवंति. ❀ Cp: परं मोक्षमनावृत्तिलक्षणम् ॥ Cs: परमस्वभावं परमात्मप्रकृतिम् ॥ Cv (reading [s]भाविनः): अभाविनः मुक्ताः । ❀

C 12. 7393
B 12. 202. 3
K. 12. 200. 3

नाम्लं कषायं मधुरं न तिक्तम् ।
न शब्दवन्नापि च गन्धवत्त-
न्न रूपवत्तत्परमस्वभावम् ॥ ३

स्पर्शं तनुर्वेद रसं तु जिह्वा
घ्राणं च गन्धाञ्श्रवणे च शब्दान् ।
रूपाणि चक्षुर्न च तत्परं य-
द्गृह्णन्त्यनध्यात्मविदो मनुष्याः ॥ ४

निवर्तयित्वा रसनं रसेभ्यो
घ्राणं च गन्धाच्छ्रवणे च शब्दात् ।
स्पर्शात्तनुं रूपगुणात्तु चक्षु-
स्ततः परं पश्यति स्वं स्वभावम् ॥ ५

यतो गृहीत्वा हि करोति यच्च
यस्मिंश्च तामारभते प्रवृत्तिम् ।
यस्मिंश्च यद्येन च यश्च कर्ता
तत्कारणं तं समुपायमाहुः ॥ ६

यच्चाभिभूः साधकं व्यापकं च
यन्मन्त्रवच्छंसते चैव लोके ।
यः सर्वहेतुः परमार्थकारी

---

3 [a]) Dn1 तीक्ष्णं; Ds1 शांतं (for शीतं). M1.5-7 नोत (for नापि). — [b]) T1 G1-3.6 न सं° (for नाम्लं). Da4 तिक्ष्णं (for तिक्तम्). — [c]) K1 शब्दवान्. K6 D4.5.9 T2 चापि न; B6 नापि हि; D6 G3 M1 नापि न (for नापि च). Ś1 K2.4 B8 (marg. as in text) गंधवंतं (for °वत्तन्). K6 D4.5.7.9 T G1-3.6 M1.5-7 च (for तन्). — [d]) Ś1 K1.2 न रूपं तत्; K4 न स्पर्शयत्तत् (for न रूपवत्तत्). Ś1 K1.2 V1 D5 G3 परमं (for °म°).

4 [a]) Da4 स्पर्शंस्; M5.7 स्पर्शांस् (for स्पर्शं). M1.5.7 रसांस् (for रसं). K6.7 V1 Bo.6.7 Da3 Dn1.n4 Ds D2.3.6.8 T G1-3.6 M1.5 च; D7 न (for तु). — [b]) K6 D7 प्राणं; V1 घ्राणौ (for घ्राणं). K7 D5.9 तु; D4 नु (for च). D7 T G1-3.6 गंधं (for गन्धान्). K6 V1 Bo.6-9 Da3.a4 Dn1.n4 Ds1 D2.3 श्रवणौ; K7 Ds2 D4.5.7.9 T G1-3.6 M1.5-7 श्रवणं (for °णे). K7 D5.9 तु; D4 नु (for च). D7 T1 G1-3.6 शब्दं (for शब्दान्). — [c]) V1 यत्परं; D6 तत्फलं (for तत्परं). Ś1 K1.2 तद् (for यद्). — [d]) T2 गृह्णाति. B9 अनाध्यात्म°; G2 अनध्यात्म° (for °ध्यात्म°). D4.7 मनुष्यः.

5 [a]) K6 Bo.6-9 Da3.a4 Dn1.n4 Ds D2.3.6.8 T1 M1.5-7 रसनां (for °नं). — [b]) K7 घ्राणे (for घ्राणं). D4 गंधान्; D7 गंधः (for गन्धात्). K6 V1 Bo.6-9 Da3.a4 Dn1.n4 Ds D2.3.5.8 श्रवणौ; K7 D6.7.9 T G1-3.6 M1.5-7 श्रवणं (for °णे). Da4 शब्दान्. — [c]) K6 V1 Bo.6-9 Da3.a4 Dn1.n4 Ds D2.3.5.6.8 M1.5-7 त्वचं (for तनुं). D6 रूपगुणांस्. K7 B6 D4.5.7 T G1-3.6 M1.5-7 च (for तु). — [d]) K1.4.7 D4.9 स्व°; D7 T G1-3.6 M1.5-7 सं (for स्वं).

❀ Cv (reading तत्स्वभावं): तेषां दिव्यगन्धरसादीनां स्वभावो यस्य । ❀

6 [a]) Ś1 K1.2 V1 Bo.6-9 Da3.a4 D6 M6 ततो (for यतो). G1 ग्रहीत्वा. Ś1 K1.2.4 यश्च; D7 T1 G1.2 M1.5-7 यद्यद्; T2 G3.6 सर्वं (for यच्च). — [b]) V1 तास्मिंश्च; D7 T1 अ° (for य°). D7 T G1-3.6 M1.5-7 यास् (for तास्). G1.3 प्रवृत्तिः. — [c]) Ds1 D7 T1 G2.3.6 यस्मै च; D4 येस्मिंश्च; G1 यस्मै * (for यस्मिंश्च). K4 येभ्यो न; B8 (marg.) यत्नेन; D5 यष्टेन; D6 यद्येव; D7 T1 G1.3.6 तद्येन (for य°). G3.6 यच्च तच्च (for यश्च कर्ता). — [d]) K4.6 Da3.a4 Dn1.n4 Ds D2.6.8 G2 यत् (for तत्). K6 कारणस् (for °णं). K2 Dn4 lacuna; K6 Bo Dn1 Ds D2.3.8 ते; V1 B6.8 (marg.).9 D5-7 T1 G1-3.6 तत् (for तं). K4.6 Bo Dn1.n4 Ds D2.3.6.8 समुदायम्; V1 B6-9 Da3.a4 D5 समवायम्; D7 T G1-3.6 समुपेयम्; M1.5-7 स्वमुपायम् (for समु°). D4.9 तत्कारणांतं तत्स्वमुपायमाहुः. ❀ Cs (reading स्वमुपेयम्): स्वं उपेयं लयस्थानं स्वभावमाहुः । अयमर्थः । लोके यान्युपादानत्वेनाधिकरणत्वेन कारणत्वेन कर्तृत्वेन च कारणानि दृष्टानि तेषामसाधारणमुत्पत्तिस्थानं परमात्मानमाहुरिति । ❀

7 [a]) Ś1 (orig.) यश्चाविभुः; Ś1 (*sup. lin.*) यश्चाभिभुः; K1 यश्च विभिः; K2.4 यश्च विभुः; K6 Dn1.n4 यद्वाप्यभूद्; K7 D4.9 यच्च ब्रह्म; V1 D2.3.5 यच्चाभिभूद्; Bo.6-9 D6.8 यच्चाप्यभूद्; B8 (marg.) यच्चातिभूर् (for °भिभूः). K6.7 V1 Bo.6-9 Da3.a4 Dn1.n4 Ds D2-6.8.9 T2 G3.6 M1.7 Cs व्यापकं (D4 °नं; D6 M1 °क°) साधकं (by transp.). M1.7 यत् (for च). D7 T1 G1.2 यच्चापि पूर्वापरसाधकं च; M5.6 यच्चाभिभूर्व्यापकसाधकं यत्. — [b]) T2 G3.6 M1 मंत्रविच्

तत्कारणं कार्यमतो यदन्यत् ॥ ७
यथा च कश्चित्सुकृतैर्मनुष्यः
शुभाशुभं प्राप्नुतेऽथाविरोधात् ।
एवं शरीरेषु शुभाशुभेषु
स्वकर्मजैर्ज्ञानमिदं निबद्धम् ॥ ८
यथा प्रदीपः पुरतः प्रदीप्तः
प्रकाशमन्यस्य करोति दीप्यन् ।
तथेह पञ्चेन्द्रियदीपवृक्षा
ज्ञानप्रदीप्ताः परवन्त एव ॥ ९
यथा हि राज्ञो बहवो ह्यमात्याः
पृथक्प्रमाणं प्रवदन्ति युक्ताः ।
तद्वच्छरीरेषु भवन्ति पञ्च
ज्ञानैकदेशः परमः स तेभ्यः ॥ १०
यथार्चिषोऽग्नेः पवनस्य वेगा
मरीचयोऽर्कस्य नदीषु चापः ।
गच्छन्ति चायान्ति च तन्यमाना-
स्तद्वच्छरीराणि शरीरिणां तु ॥ ११
यथा च कश्चित्परशुं गृहीत्वा
धूमं न पश्येज्ज्वलनं च काष्ठे ।
तद्वच्छरीरोदरपाणिपादं

C. 12. 7405
B. 12. 202. 12
K. 12. 200. 12

(for °वच्). K4 छेत्स्यति; K6 Bo. 6-8 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 स्थास्यति; K7 D4. 9 शस्यते; V1 B9 स्थाप्यते; T2 G3. 6 M1. 5. 6 शि(G6 श)ष्यति; M7 शस्यति (for शंस्यते). K6 V1 Bo. 6 Da3 Dn1. n4 Ds D2. 3. 5. 6. 8 T2 M1. 5-7 चापि; K7 वैव; B6 (marg.). 7-9 Da4 जीव-; G3. 6 सर्व- (for चैव). M7 लोकः (for लोके). D7 T1 G1. 2 यन्मंत्रमर्चिष्यति सर्वलोकः. ❀ Cv: मन्त्रवत् सकलवेदप्रतिपाद्यम् । ❀ —[c]) Ds1 D7 T G1-3. 6 यत् (for यः). Ś1 K1. 2. 4. 6. 7 V1 Bo. 7-9 Da3 Dn1 D2. 4. 6. 9 परमात्मकारी (for °र्थकारी). —[d]) B9 यदा-न्यत्.

8 [a]) K6. 7 V1 Bo. 6. 8. 9 Da3. a4 Dn1. n4 Ds D2-6. 8. 9 हि (for च). B6. 8 D4. 7. 9 T G1-3. 6 M1. 5-7 स्वकृतैर्; Dn1 सुकृतो (for °तैर्). —[b]) T2 चाप्नुते (for प्रा°). D6 तथा; T G1-3. 6 M1. 5-7 च (for ऽथ). —[c]) D6 शरीरेण (for °रेषु). —[d]) D4. 7. 9 T G1-3. 6 M1. 5-7 स्वकर्मभिर् (G2 °क-) (for °जैर्). G3. 6 निबंधनं (for निबद्धम्).

9 [a]) D6 यदा (for यथा). K4. 6 V1 Bo 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 प्रदीप्तः (for °पः). Ds1 D7 T1 परतः (for पु°). K6 प्रकाशः; V1 Bo. 6-8 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6 8 प्रदीपः; G2 °प्तं (for °प्तः). ❀ Cs: अत्र प्रदीपशब्देन प्रदीपाधारो वर्तिकादिर्विवक्षितः । ❀ —[b]) Dn4 प्रकाशमानस्य; D7 T1 G1-3. 6 °मर्थस्य (for °मन्यस्य). S1 K1 दीप्यं; K2 दीप्यं; K7 D4. 9 दीप्तः; D7 T G1-3. 6 M1. 5-7 विद्व(T1 G1. 2 °द्वा)न् (for दीप्यन्). —[c]) K7 यथेह; Da3 a4 तथेति; D5. 7 T G1-3. 6 M1. 5-7 तथैव (for तथेह). S1 K1. 2 -दीपवृद्धा; Cs °वृक्षा (as in text). ❀ Cv: पञ्चेन्द्रियाख्यदीपैः स-हिता वृक्षाः, देहाख्यवृक्षाः । ❀ —[d]) G1 ज्ञानः. Ś1 K1. 2 B7. 9 -प्रदीपाः; G1. 2 -प्रदीप्तः (for °प्ताः). K7 परमं त एव; D7 परमं तदेव (for °वन्त एव).

10 [a]) B7 Dn1 D2-4 राज्ञा (for राज्ञो). G3 बहु-भृत्यमात्याः (for बहवो ह्यमात्याः). —[b]) B7 सम्यक्; D6 प्रत्यक्; G1 प्रथक् (for पृ°). Ś1 K1. 2. 7 D4. 9 प्रवादं; Cs प्रमाणं (as in text). K1 om. प्रवदं. ❀ Cs: प्रमाणं प्रमितमर्थम् । ❀ —[c]) B7 यद्वत् (for तद्वत्). B7 विश्व; T1 युक्ता (for पञ्च). V1 तद्वच्छरीरे प्रभवंति पंच. —[d]) K6. 7 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds1 D2-4. 6-9 G1-3. 6 ज्ञानैकदेशाः; M7 °देशं (for °देशः). K7 D6 शतेभ्यः; G1 स एभ्यः (for स तेभ्यः).

11 [a]) D5 यच्चार्चिषो; G6 यथार्चिषा. K7 Da4 [ऽ]ग्निः. K4. 6. 7 Bo. 9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 वेगो; G6 वेगान् (for वेगा). —[b]) K1 मारीचयो-र्कस्य (sic). B7 वेगाः; G1 वापः (for चापः). —[c]) K1. 2 चायंति; D4 वायांति. Ś1 (*sup. lin.*) उह्यमानास्; K4. 6 V1 Dn1. n4 Ds D2. 3. 6. 8 संचरं-त्यस्; K7 D4. 5. 9 संततानि; Bo संतरंत्यस्; B6 संच-रंति; B3 Cpp संसरंत्यस्; B9 संति यास्य; Da3. a4 संतनत्यस्; D7 T G1-3. 6 M1. 5-7 संततास्तु (for तन्य-मानास्). ❀ Cp: संततंत्यः, संतन्वतः, संसरंत्यः प्रसरंत्य इत्यपि पाठो भवति । ❀ —[d]) D4. 9 नु (for तु).

12 [a]) Da3. a4 lacuna; Ds1 M1. 5-7 हि; G1. 2 स (for च). M1 परमं (for °शुं). —[b]) K7 G1. 2 च (for न). G3 6 न (for च). K7 Ds1 योगात् (for काष्ठे). — S1 K1 2. 4. 7 Ds1 om. (hapl.) 12[c]-13[c]. —[c]) B7 partly damaged. Dn4 -पाणिपादे (for

छित्त्वा न पश्यन्ति ततो यदन्यत् ॥ १२
तान्येव काष्ठानि यथा विमथ्य
धूमं च पश्येज्ज्वलनं च योगात् ।
तद्वत्सुबुद्धिः सममिन्द्रियत्वा-
द्बुधः परं पश्यति स्वं स्वभावम् ॥ १३
यथात्मनोऽङ्गं पतितं पृथिव्यां
स्वप्नान्तरे पश्यति चात्मनोऽन्यत् ।
श्रोत्रादियुक्तः सुमनाः सुबुद्धि-
र्लिङ्गात्तथा गच्छति लिङ्गमन्यत् ॥ १४
उत्पत्तिवृद्धिक्षयसंनिपातै-
र्न युज्यतेऽसौ परमः शरीरी ।
अनेन लिङ्गेन तु लिङ्गमन्य-
द्गच्छत्यदृष्टः प्रतिसंधियोगात् ॥ १५
न चक्षुषा पश्यति रूपमात्मनो
न चापि संस्पर्शमुपैति किंचित् ।
न चापि तैः साधयतेऽथ कार्यं
ते तं न पश्यन्ति स पश्यते तान् ॥ १६
यथा प्रदीपे ज्वलतोऽनलस्य
संतापजं रूपमुपैति किंचित् ।
न चान्तरं रूपगुणं बिभर्ति

---

°पादं ). M1 तद्वच्छरीरादपराणि पादं. — d ) Da3. a4 ततो यदन्यः; D4. 5. 9 यतस्ततोऽन्यत्.

13 Ś1 K1. 2. 4. 7 Ds1 om. $13^{ab}$ ( cf. v. l. 12 ). G1 om. ( hapl. ) $13^{a}$–$14^{b}$. — a ) G2 तथा ( for यथा ). — b ) D7 T G2. 3. 6 काष्ठे; M1. 5–7 तत्र ( for योगात् ). — c ) K1. 4. 6 V1 B6. 7 Dn4 Ds2 D2. 3. 8 T2 M1. 5–7 सबुद्धिः; Ds1 D7 G6 सुबुद्धिं; D5 T1 G2. 3 सबुद्धिं ( for सुबुद्धिः ). K4. 6 Bo. 7 Dn1. n4 Ds1 D2. 3. 6. 8 समर्मिद्रियात्मा; K7 D9 सुसमेंद्रियत्वाद्; B6 Ds2 D5. 7 T G2. 3. 6 M1. 5–7 समामिंद्रियार्थैः ( B6 °र्थाद्; D5 °र्थैः; D7 °र्थः ); D4 स समेंद्रियत्वाद् ( for सममिन्द्रियत्वाद् ). — d ) K4 D3 बुद्धिः; D4. 6 बुद्धः ( for बुधः ). K4. 6 V1 Bo. 6–9 Dn1. n4 Ds D2. 3. 5–8 T G2. 3. 6 तं; K7 स्व- ( for स्वं ).

14 G1 om. $14^{ab}$ ( cf. v. l. 13 ). — b ) K6 चान्यतो; D4 वात्मनो. — c ) K7 B7 श्रोत्रादियुक्ताः ( B7 °क्तं ); M5 °भियुक्तः. K6 Dn1. n4 Ds D2. 3. 6. 8 सुमहान्; K7 सुमनः; B6 ( m as in text ). 7. 8 ( m as in text ). 9 तु महान्; D7 T1 G1–3. 6 M1. 5–7 समनाः ( for सु° ). K6 B6. 7 ( marg. as in text ) Dn1. n4 Ds D2. 6. 7 T G2. 3. 6 M1. 5–7 सबुद्धिर्; D3. 8 स्वबुद्धिर्; D5 सुबुद्धिं ( for °द्धिर् ). — d ) Da4 partly damaged. B7 स्वर्गात् ( for लिङ्गात् ). G2 तथो ( for तथा ).

15 a ) Ś1 K1. 2 -वृद्धिं; Da3. a4 -बुद्धि-; G2 -व्रित्ति- ( sic ) ( for -वृद्धि- ). K4. 6. 7 V1 Bo. 6. 7. 8 ( marg. as in text ). 9 Dn1. n4 Ds2 D2–7. 9 -व्यय- ( for -क्षय- ). D8 गच्छत्यदृष्टैः फलसंनियोगैर्. ❀ Ca: क्षयो हि क्षीणतामात्रम्, संनिपातो मरणम् । ❀ — b ) G3 नि- ( for न ). D5 मुच्यते ( for युज्यते ). D3 शरीरे. — c ) Da3 om. लिङ्गेन. D4. 9 नु ( for तु ). — d ) K6 B7. 8 ( marg. as in text ) Cpp अदृष्टैः; K7 °ष्टिः; V1 Bo. 6. 9 °ष्टेः; D5 अतुष्टः; D7 अदुष्टः; M1. 5. 6 अदृष्टं ( for °ष्टः ). K6 Bo. 6. 7. 8 ( marg. as in text ). 9 Dn1. n4 Ds D2. 3. 5. 6. 8 Cp फलसंनियोगात्; V1 B6 ( marg. ) Da3 प्रतिसंनि°; Cpp अभिसंधियोगात् ( for प्रतिसंधि° ). ❀ Ca: प्रतिसंधियोगात् प्रतिसंधानरूपेण ज्ञानेन योगात् ॥ Cp: अदृष्टः असम्यग्दर्शनः । फलसंनियोगात् सुखदुःखाभिमानात् । ❀

16 a ) B9 रूपमात्मने; D7 T G1–3. 6 M1. 5–7 चक्षुरात्मा ( M1. 5–7 °त्मनो ). — K6 reads $16^{b}$–$17^{b}$ on marg. — b ) K6 V1 G3. 6 कश्चित्; B6. 8 Da3 कंचन; B9 किंचन; Ds2 कंचित् ( for किं° ). — D5 G1 om. ( hapl. ) $16^{c}$–$17^{b}$. — c ) D7 T G2. 3. 6 तथापि ( for न चापि ). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds2 D2. 3. 6. 8 तु; K7 D4. 7. 9 T G3. 6 M1. 5–7 च; Ds1 नु; G2 [ऽ]पि ( for ऽथ ). — d ) G2 तत् ( for तान् ).

17 D5 G1 om. $17^{ab}$ ( cf. v. l. 16 ); K6 reads $17^{ab}$ on marg. — a ) K6 V1 Bo. 6–9 Da3. a4 Dn1 Ds D2. 3. 6–8 T G2. 3. 6 M1. 5–7 Cs समीपे; Dn4 शरीरे ( for प्रदीपे ). Da4 ज्वलनो; D7 G3. 6 चलतो ( for ज्व° ). — b ) K6 तापम् ( for रूपम् ). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds1. s2 ( before corr. ) D2. 3. 6. 8 M1. 5–7 Cv कश्चित् ( for किंचित् ). ❀ Cv ( reading कश्चित् ): कश्चित् अग्निस्तम्भनशक्तिमान्पुरुषः ॥ Cs: किंचिद् तृणादिकं वस्तु । ❀ — c ) D5 तं ( for न ). K6 Bo. 6–9 Dn1. n4 Ds D2. 3. 5. 6. 8 चापरे; D7 T G1–3. 6 M1. 5–7 Cs चांतरा ( for °रं ). ❀ Cs: अन्तरा तयोर्ज्वलनतृणादिकार्ययोर्मध्ये । ❀ — d ) K1 ता ( for तद् ). K7 V1 B6–9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 दृश्यति

तथैव तद्दृश्यते रूपमस्य ॥ १७
यथा मनुष्यः परिमुच्य काय-
मदृश्यमन्यद्विशते शरीरम् ।
विसृज्य भूतेषु महत्सु देहं
तदाश्रयं चैव बिभर्ति रूपम् ॥ १८
खं वायुमग्निं सलिलं तथोर्वीं
समन्ततोऽभ्याविशते शरीरी ।
नानाश्रयाः कर्मसु वर्तमानाः
श्रोत्रादयः पञ्च गुणाञ्श्रयन्ते ॥ १९
श्रोत्रं खतो घ्राणमथो पृथिव्या-
स्तेजोमयं रूपमथो विपाकः ।
जलाश्रयः स्वेद उक्तो रसश्च
वाय्वात्मकः स्पर्शकृतो गुणश्च ॥ २०
महत्सु भूतेषु वसन्ति पञ्च
पञ्चेन्द्रियार्थाश्च तथेन्द्रियेषु ।
सर्वाणि चैतानि मनोनुगानि
बुद्धिं मनोऽन्वेति मनः स्वभावम् ॥ २१
शुभाशुभं कर्म कृतं यदस्य
तदेव प्रत्याददते स्वदेहे ।
मनोऽनुवर्तन्ति परावराणि

C. 12. 7415
B. 12. 202. 22
K. 12. 200. 22

(for °ते).

18 a) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 तथा; D7 T1 G1. 2 M1. 6 यदा (for यथा). D5 मनुष्याः. D7 T G1–3. 6 प्रवि( G1 °ति )मुच्य (for परि°). G1 कार्यम् (for कायम्). ❀ Cs: मनुष्यः परकायप्रवेशनशक्तो मनुष्यः । ❀ — b) D4 एतद् (for अन्यद्). K6 विगते (for विशते). — c) K6 विस्पष्ट- (for विसृज्य). K6 Dn4 D6. 8 महत्स्वदेहं; G3 (before corr.) °त्स्वरूपं (for °त्सु देहं). ❀ Ca: महत्सु भूतेषु समवायवृत्त्या, इन्द्रियेषु तु प्रकाश्यतया सन्ति रूपादयः । एतानि भूतेन्द्रियार्थेन्द्रियाणि मनस्यधिष्ठेयतया वसन्तीति भावः । मनस्तु बुद्धिनियतं, बुद्धिस्तु स्वभावमात्मानमन्वेति । ❀ — d) Ś1 K1. 2 यथाश्रयं (for तदा°).

19 a) G1 वायुर्. K7 शलिलं. K1. 6. 7 Da4 D4. 6. 9 तथोर्वी; Ds महीं च; D8 तथार्चि (for तथोर्वीं). — b) T2 G1. 2 M1. 6. 7 हि (for ऽभि-). Ś1 K1. 2. 4 शरीरे; B8 (marg.) Cpp °रं. ❀ Cp: शरीरी शरीरसंबन्धी महाभूतगणः । ❀ — c) K1 नानाश्लयाः; D4 मानाश्रयाः; M1 नारा° (for नाना°). ❀ Cv (reading नान्याश्रयाः): नान्याश्रयाः देहादन्याश्रयरहिताः । ❀ — d) Ds1 शब्द- (for पञ्च). Ś1 K1. 2. 4. 6. 7 V1 B8 (marg.) D4. 5. 7. 9 T G1–3 M7 Cpp Cs गुणाः (for गुणाञ्). Ś1 K1. 2 D4. 9 श्रयंति; K4 श्रयेति; K7 श्रवंति (for श्रयन्ते). ❀ Cp: पञ्च गुणा इति पाठे श्रयन्ते शरीरमिति शेषः । ❀

20 a) Cs नभो (glossed by नभोमयं) (for खतो). V1 Bo. 9 Da3. a4 D5 पृथिव्यां (for °व्यास्). D7 T G1–3. 6 M1. 5–7 श्रोत्रं नभो घ्राणमुक्तं पृथिव्यास्. — b) Ś1 K1 रूपमयो; B9 °मतो; D7 G1–3. 6 M1. 5–7 चक्षुरथो (for रूपमथो). — c) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 T G1–3. 6 M1. 5–7 जलाश्रयं (for °श्रयः). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 D2. 3. 5–8 तेज उक्तं; T G1–3. 6 M1. 5–7 ज्ञानमुक्तं (for स्वेद उक्तो). Ś1 K1 नभस्तो; K2 नवस्रो; Dn4 Ds1 D2. 6 M1. 5. 6 रसं च; D8 रजश्च; T2 G1. 2 रसाश्च (for रसश्च). — d) Ds1 वाय्वात्मकाः. D8 गुणाश्च. D7 T G1–3. 6 M1. 5–7 वाय्वात्मकं स्पर्शनमा( D7 T1 G1. 2 °मथा )मनंति.

21 a) V1 च संति; Ds1 D7 T G1–3. 6 M1. 5–7 Cs वदंति (for वसन्ति). — b) Ś1 K1. 2. 7 D4. 9 सर्वे- ( K7 D4. 9 °दें )द्रियार्थाश्च; B9 D7 T1 G1. 2 पंचेंद्रियार्थेषु ( B9 °र्थश्च ) (for °र्थाश्च). K7 यथेंद्रियेषु; D7 T1 G1–3 तथेंद्रियाणि (for °येषु). — c) D4 वैनानि. B7 भूतानि गुल्मानि मनोनुगानि. — d) K1 रद्धिं (sic); K6 Bo. 6. 8 Da3. a4 Dn4 Ds D3. 5. 7 T1 G1. 3 M5. 6 बुद्धिर्; B7 बुद्धेर् (for बुद्धिं). K6 B8 (marg.). 9 D4 G3 मतिः स्वभावं; T2 G1 M7 मतिस्व°; G2 मनस्य भावं (for मनः स्वभावम्).

22 a) K6 V1 Bo. 7 Dn1. n4 Ds D2. 3. 6. 8 T2 यदन्यत् (for यदस्य). — b) Ś1 K1 तदेह; G1 तदैव. Ś1 (before corr.) K1 प्रीत्याददति; Ś1 (by corr.) K2. 4 V1 प्रत्याददति; K7 D4. 5. 9 चैवाददते; Ds1 D7 T G1–3. 6 M1. 5–7 प्रेत्या° (for प्रत्या°). K7 D4. 5. 7–9 T G1–3. 6 M7 [ऽ]न्यदेहे; B6 (marg. as in text). 7. 8 (marg. as in text). 9 Cp स्वभावं; M1. 5. 6 [ऽ]स्य देहे (for स्वदेहे). ❀ Cp: स्वभावमात्मानं प्रति आददते गृह्णन्ति प्रापयन्तीत्यर्थः ॥ Cs: प्रत्यन्यदेहे आददते । ❀ — c) K1 मम (for

C. 12. 7415
B. 12. 202. 22
K. 12. 200. 22

जलौकसः स्रोत इवानुकूलम् ॥ २२
चलं यथा दृष्टिपथं परैति
सूक्ष्मं महद्रूपमिवाभिपाति ।
स्वरूपमालोचयते च रूपं
परं तथा बुद्धिपथं परैति ॥ २३

इति श्रीमहाभारते शान्तिपर्वणि पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

## १९६

मनुरुवाच ।
यदिन्द्रियैस्तूपकृतान्पुरस्ता-
त्प्राप्तान्गुणान्संस्मरते चिराय ।
तेष्विन्द्रियेषूपहतेषु पश्चा-
त्स बुद्धिरूपः परमः स्वभावः ॥ १
यथेन्द्रियार्थान्युगपत्समस्ता-
न्नावेक्षते कृत्स्नमतुल्यकालम् ।
यथाबलं संचरते स विद्वां-
स्तस्मात्स एकः परमः शरीरी ॥ २
रजस्तमः सत्त्वमथो तृतीयं

---

मनो ). — d ) K1 जलोकसः. K6 श्रोत्र; K7 V1 Bo D4. 6. 9 श्रोत ( for स्रोत ).

23 a ) K6 D8 जलं; Da4 बलं ( for चलं ). B6 दृष्टपथं. K7 परेति; D7 T G1–3. 6 M1. 5–7 प्रयाति ( for परैति ). ❀ Ca: चलम्, अलातचक्रमिव ॥ Cv: चलं चरम् । सूक्ष्मजीवस्य रूपम् । ❀— V1 reads 23bcd on marg. — b ) K7 D4. 9 शूक्ष्मं. Ds1 महारूपम्; G1. 2 M5–7 महद्भूतम् ( for °द्रूपम् ). K6. 7 B7 Dn1 Ds D2–4. 8. 9 T2 G3. 6 M1. 5. 6 [अ]भिभाति; V1 Bo. 6. 8. 9 Da3. a4 °याति; B8 ( marg. ) D6. 7 T1 G1. 2 [अ]वभाति; D5 [आ]ददाति ( for [अ]भिपाति ). — c ) B8. 9 Da3 स्वं ( for स्व- ). D7 T G1–3. 6 M1. 5–7 आलोकय( M6 °यि )तां ( for °चयते ). Cv धीरः ( for रूपं ). — d ) K7 D4. 9 बुद्धिपथा; B9 Dn1 T1 G1. 2 °परं; M7 ( *sup. lin.* ) °पथो ( for °पथं ). D4 T1 G1 परेति; M7 ( *sup. lin.* ) व्यवैति ( for परैति ).

Colophon. — *Sub-parvan :* Ś1 K1. 4. 6. 7 Bo. 6. 7. 9 Da3. a4 Dn1. n4 Ds D2–8 T G1–3. 6 M1. 5–7 मोक्षधर्म. — *Adhy. name :* Ś1 K1. 2. 4. 6 V1 B6–9 Da3. a4 Dn1 Ds D2. 3. 5. 6. 8 M5 मनुबृहस्पतिसंवादः; K7 D4. 9 बृहस्पतिमनुसंवादः; Bo मनुभरद्वाजसंवादः; T2 भूतव्यापारं; M1. 6. 7 इंद्रियोत्पत्तिः. — *Adhy. no.* ( figures, words or both ): B7 Dn4 Ds D7 T1 G1. 3. 6 M1. 5–7 28; Dn1 29; D8 27; T2 G2 42. — *Śloka no.:* Da4 Dn1. n4 Ds1 D8 23.

196

1 D7 T G1–3. 6 M1. 5–7 बृहस्पतिः ( for मनुः ). — a ) T2 G1 यदींद्रियैस्. K2 तूपहतान्; K4 D2–6. 9 °हृतं; K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D8 °हितं; K7 B8 ( marg. ) °हृतं; D7 T G1–3. 6 M1. 5–7 °गतैः ( for °कृतान् ). — b ) Ś1 K2 प्राणान्; K1. 7 प्राणो; D4. 9 प्राणाद् ( for प्राप्तान् ). Cpp संहरते ( for संस्मरते ). — c ) Dn4 तथा ( for तेषु ). K1 [उ]पहितेषु; G1 °गतेषु ( for °हतेषु ). — d ) Ś1 सु-; G3 स्व- ( for स ). K7 Dn4 Ds1 D4. 9 G1. 2 M1. 5–7 परम- ( for °मः ). Cpp सस्वभावः ( for स्वभावः ). ❀ Ca : परम उत्कृष्टः स्वभावश्चेतनाख्य इत्यर्थः ॥ Cp : परमः स्वतन्त्रः स्वभावः स्वमहिमप्रतिष्ठः आत्मा । ❀

2 a ) B9 G3. 6 यदिंद्रियार्थान् ( G3 °द् ); D7 T G1 यदीं°. K6 B7–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 M5. 6 समंतान् ( for समस्तान् ). — b ) K6 चोपेक्षते; K7 B8 D4. 5. 9 M1 Ca नापे( K7 °पै )क्षते; V1 Bo. 6. 7. 9 Da4 Dn1. n4 Ds D2. 3. 8 T2 नोपेक्षते; Da3 D6 नोपेक्ष्यते; G1 अवेक्षते ( for नावे° ). D6 अनंत- ( for अतुल्य- ). K1. 2. 4 -काले ( for -कालम् ). B7 damaged. D7 T G1–3. 6 M1. 5–7 कृत्स्नशस्तुल्यकालं. ❀ Ca : अतुल्यकालं क्रमेणानुभूयमानम् । ❀ — c ) K4 V1 Bo. 8 ( marg. ) Da3. a4 Dn1. n4 Ds D2. 3. 6 तथाचलं; K6 B6. 9 D5. 8 तथाबलं; D7 T G1–3. 6 M1. 5–7 यथाक्रमं; Ca °बलं ( as in text ). D5 संचलते; M7 स्म चरते ( for संच° ),

गच्छत्यसौ ज्ञानगुणान्विरूपान् ।
तथेन्द्रियाण्याविशते शरीरी
हुताशनं वायुरिवेन्धनस्थम् ॥ ३
न चक्षुषा पश्यति रूपमात्मनो
न पश्यति स्पर्शनमिन्द्रियेन्द्रियम् ।
न श्रोत्रलिङ्गं श्रवणे निदर्शनं
तथागतं पश्यति तद्विनश्यति ॥ ४
श्रोत्रादीनि न पश्यन्ति स्वं स्वमात्मानमात्मना ।
सर्वज्ञः सर्वदर्शी च क्षेत्रज्ञस्तानि पश्यति ॥ ५

यथा हिमवतः पार्श्वं पृष्ठं चन्द्रमसो यथा ।
न दृष्टपूर्वं मनुजैर्न च तन्नास्ति तावता ॥ ६
तद्वद्भूतेषु भूतात्मा सूक्ष्मो ज्ञानात्मवानसौ ।
अदृष्टपूर्वश्चक्षुर्भ्यां न चासौ नास्ति तावता ॥ ७
पश्यन्नपि यथा लक्ष्म जगत्सोमे न विन्दति ।
एवमस्ति न *वेत्येतन्न च तन्न परायणम् ॥ ८
रूपवन्तमरूपत्वादुदयास्तमये बुधाः ।
धिया समनुपश्यन्ति तद्गताः सवितुर्गतिम् ॥ ९
तथा बुद्धिप्रदीपेन दूरस्थं सुविपश्चितः ।

C. 12. 7426
B. 12. 203. 10
K 12. 201. 10

---

Ds2 D5 च (for स). B6. 8. 9 विद्मस्; D5 बुध्याम् (for विद्वांस्). — d) D5 अस्मात्; D6 तथा (for तस्मात्). Ś1 K1. 2. 4 वैकः; D2. 3 विद्वान् (for एकः).

3 a) D2 om. रजस्तमः. K7 सत्त्वतमोस् (for °मथो). G1 त्रितीयं. — b) Ś1 K1. 2. 4 अथो (for असौ). K6 Bo. 6. 7. 8 (marg. as in text). 9 Da3. a4 Dn1. n4 Ds2 D2. 3. 5–8 स्थान- (for ज्ञान-). K1 -गुणान्वरूपान् (sic); G1 -गुणान्यरूपान् (for °न्विरूपान्). ❀ Ca: रजसा संदेहः तमसा विपर्ययः सत्त्वेन निश्चयः । ❀ — After 3ab, Kumbh. ed. ins.:

533* न तैर्निबद्धः स तु बध्नाति विश्वं
न चानुयातीह गुणान्परात्मा ।

— c) Ś1 K1. 2. 4 यथा (for तथा). Ś1 K1 D7 T G1–3. 6 M1. 5. 6 आविशति (for °ते). D7 T G1–3. 6 M1. 5. 6 [इ]ह देही (for शरीरी).

4 a) D7 G1. 2 आत्मा (for आत्मनो). — b) V1 पश्यते. K6 B9 Dn4 Ds D2. 3. 5. 6 8 Cnp इंद्रियाणां; V1 .°येण (for °येन्द्रियम्). ❀ Cn: इन्द्रियाणामिति पाठे निर्धारणे षष्ठी । इन्द्रियाणां मध्ये स्पर्शनं यत्तदपि न पश्यतीति योज्यम् । ❀ — c) B7 damaged; D8 G6 श्रोत्रलिंगे; D7 T G1–3 °लिंग- (for °लिङ्गं). K4. 6 V1 Bo Dn1. n4 Ds D3. 5–8 T G1–3. 6 M1. 5–7 श्रवणेन (for श्रवणे नि-). ❀ Cn: श्रवणेन वेदान्तवाक्यविचारेणात्मनो दर्शनम् । ❀ — d) K4. 6 V1 Bo. 6–9 Dn1. n4 Ds D3. 5. 6. 8 त(B9 य)था कृतं; D7 T G1–3. 6 M1. 5–7 तथा न तत् (for तथागतं). K7 तद्विनश्येत्; B8 (marg. as in text) तद्धि नश्यति; D1 T G1–3. 6 M1. 5–7 ताद्धि पश्यति (for तद्विन°).

5 K7 repeats 5a after 9c. — a) K7 (both times) D4. 5. 9 न श्रोत्रादीनि पश्यंति. — b) T1 स्व- (for स्वं). D5 यस् (for स्वम्). K6 आत्मनः; G1 lacuna. — c) Da4 सर्वज्ञं. Da4 सर्वदर्शि; D7 T1 G1–3. 6 °देही. — d) K6 Bo. 7 Dn1. n4 Ds D2. 3. 6 सर्वज्ञ(Dn4 °त)स् (for क्षेत्र°).

6 a) K1 हि सर्वतः; Da4 हिमवतं. D4 पार्श्वं. — b) Da3. a4 पृष्ठश्. D6 चंद्रमसं. — c) K7 दृष्ट-पूर्वं-; Da4 D4 दृष्टपूर्वं (for दृष्ट°). B7–9 विप्रेंद्र; D8 अतुलैर् (for मनुजैर्). — d) K7 Dn4 Ds1 चं तत्र; M1. 5. 6 चैतन्न (for च तन्न). Ds1 भावना (for तावता).

7 a) K1 [अ]भूतात्मा. — c) Ś1 K1. 2 -रूपश्; Dn4 T G1. 2 M7 -पूर्वं (for -पूर्वश्). — d) D4 वा (for च). K2. 4 चास्ति (for नास्ति).

8 a) K2. 4 पश्य भूमिर् (for पश्यन्नपि). D3 तथा (for यथा). K2. 4 लक्ष्म्या; B6. 8 (marg. as in text). 9 सूक्ष्मं; B6 (marg.) लक्ष्यं; B7 पूर्वं (for लक्ष्म). — b) Ds2 (before corr. as in text) D4. 5. 7. 8 T G1. 3. 6 M1. 5–7 जनः (for जगत्). K1. 2. 4 सोमो (for सोमे). — c) D7 एवं मेस्ति (for एवमस्ति). Ds2 D5 च (for न). Ś1 K2 वेत्येदं; K1 वेतिदं; K4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds1 D2. 3. 6 चोत्पन्नं; K7 D4. 8 वेत्यन्यन्; Ds2 D5 चैतन्यं; D7 T G1–3. 6 M1. 5–7 चेतन्न; D8 चौतल्प (sic) (for *वेत्येतन्). — d) K1 Ds1 तत्र (for तन्न). ❀ Ca: न च तन्न परायणमिति । स एव योगिनां परमा गतिः ॥ Cv: (reading अस्ति न वेत्यन्यः): अन्यो मध्यमजीवः । अस्ति न वेति वेत्ति । परायणं मुक्ताधारं नारायणम् । मिथ्याज्ञानी न वेत्ति । ❀

9 a) K1 रूपमंतम् (for रूपवन्तम्). G8 अरूपवंतम् (for अरूपत्वाद्). — b) K6. 7 Bo. 6–9 Da3. a4 Dn1. n4 D2–6. 8. 9 T2 G2. 8 उदयास्तमने (D5 °ते; T2 °यौ; G8 °यं)

C. 12. 7426
B. 12. 203. 10
K. 12. 201. 10

प्रत्यासन्नं निनीषन्ति ज्ञेयं ज्ञानाभिसंहितम् ॥ १०
न हि खल्वनुपायेन कश्चिदर्थोऽभिसिध्यति ।
सूत्रजालैर्यथा मत्स्यान्बध्नन्ति जलजीविनः ॥ ११
मृगैर्मृगाणां ग्रहणं पक्षिणां पक्षिभिर्यथा ।
गजानां च गजैरेवं ज्ञेयं ज्ञानेन गृह्यते ॥ १२
अहिरेव ह्यहेः पादान्पश्यतीति निदर्शनम् ।
तद्वन्मूर्तिषु मूर्तिस्थं ज्ञेयं ज्ञानेन पश्यति ॥ १३
नोत्सहन्ते यथा वेत्तुमिन्द्रियैरिन्द्रियाण्यपि ।
तथैवेह परा बुद्धिः परं बुद्ध्या न पश्यति ॥ १४
यथा चन्द्रो ह्यमावास्यामलिङ्गत्वान्न दृश्यते ।
न च नाशोऽस्य भवति तथा विद्धि शरीरिणम् ॥ १५
क्षीणकोशो ह्यमावास्यां चन्द्रमा न प्रकाशते ।
तद्वन्मूर्तिवियुक्तः सञ्शरीरी नोपलभ्यते ॥ १६
यथा कोशान्तरं प्राप्य चन्द्रमा भ्राजते पुनः ।
तद्वल्लिङ्गान्तरं प्राप्य शरीरी भ्राजते पुनः ॥ १७
जन्मवृद्धिक्षयश्चास्य प्रत्यक्षेणोपलभ्यते ।

---

(for °स्तमये). — After 9ᵉ, K7 repeats 5ᵃ. — ᵈ) D6 तद्भवा; G6 M7 तां गताः (for तद्गताः).

10 ᵃ) M6 बुद्धिः (for बुद्धि-). — ᵇ) M1. 5–7 दूरस्थाः (for °स्थं). K7 G1 स; Ds2 नु (for सु-). K1 -विपश्चिताः; V1 -विनिश्चितः (for -विप°). — ᶜ) K6 Ds2 G3. 6 प्रत्यासन्ना; K7 °पत्यं; D4. 9 °पार्त्तिं; D7 T1 G1. 2 °पन्ना (for °सन्नं). Ś1 K1 निरीक्ष्यंते; K2 V1 B6. 8 (both marg.). 9 निरीक्षंते; Bo Dn1 निनीषंते; B6. 8 Da3. a4 Ds2 D3. 6. 7 T G1–3. 6 निषीदंति; B7 न सीदंति; Ds1 विषीदंति; D5 जिगीषंति (for निनीषन्ति). — ᵈ) G1. 2 ते यं (for ज्ञेयं). D4 ज्ञानानि; G2 जानाभि- (for ज्ञानाभि-). Bo G3. 6 -संधितं; B9 (marg. as in text) M7 -संज्ञितं; Ds1 -संहितां; D5. 7 -संगतं (for -संहितम्).

11 ᵃ) G1 अनपायेन (for अनु°). — ᵇ) Ś1 K1. 2 किंचिद् (for कश्चिद्). Ś1 K1. 2 अर्थेन; D7 अर्थे हि (for अर्थोऽभि-). K7 D4. 9 प्रसिध्यति; B6–8 [ऽ]भिषि°; D5 [ऽ]नुसि°; T2 न सि°; G3. 6 [ऽ]पि सि°; M1. 5–7 [ऽ]त्र सि° (for ऽभिसि°).

12 ᵇ) Ś1 K1. 2 D5 तथा (for यथा). — ᶜ) G3. 6 नागानां (for गजानां). K1. 4. 6 D2. 3. 5. 8 G1. 2 एव (for एवं). — ᵈ) K7 ज्ञेय-; Bo. 6 (marg. as in text). 7–9 Da3. a4 G1 ज्ञानं (for ज्ञेयं). K7 -कालेन (for ज्ञानेन). K2 लभ्यते (for गृह्यते).

13 D5 om. (? hapl.) 13. — ᵃ) K4 D4 ह्यहः (for ह्यहेः). M1. 6 पादं (for पादान्). — ᵇ) Dn1 G1 पश्यंति. K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 हि (D2. 3 [ह्]ह) नः श्रुतं (for निदर्शनम्). — ᶜ) K7 B8 (marg. as in text) Da3. a4 D4. 9 M1. 6 [अ]मूर्तिस्थं (for मूर्तिस्थं). — ᵈ) B6 (marg. as in text). 7. 8 (marg. as in text). 9 Da3. a4 ज्ञानं; D3. 9 ज्ञाने; D8 सेयं (for ज्ञेयं). D3 ज्ञेयेन; D9 नैव तु (for ज्ञानेन). D7 T G1–3. 6 M5. 6 गृह्यते (for पश्यति).

14 ᵃ) K4 नोत्सहेते; G3. 6 न सहंते. K2 वेत्तुर्. — ᵇ) D6 om. (hapl.) इन्द्रियै. — ᶜ) K6 तथैव ह. Ds1 पराग्; D5 [अ]परा (for परा). — ᵈ) B7. 8 (marg.) परां; G1 पर- (for परं). K1 बुद्धा; K6 Bo. 6. 8. 9 Da3. a4 Dn4 Ds1 D2. 3. 5. 8 बोध्यं; B7 बाध्यं; B8 (marg.) बुद्धिं; Dn1 Ds2 D6 बोधं (for बुद्ध्या).

15 ᵃ) Ś1 K1 ह्यमावस्यां. — ᵇ) Ś1 K1. 2. 4 रात्रिं गत्वा; K7 D4. 9 मलिनत्वान् (for अलिङ्गत्वान्). Ś1 (also as in text) K2. 4 दृश्यति; D8 गृह्यते (for दृश्यते). — K1 om. (hapl.) 15ᶜ–16ᵇ. — ᶜ) Ś1 K2 नष्टः स; M1 नाशोद्य (for नाशोऽस्य). — ᵈ) M7 यथा (for तथा). D7 बुद्धि- (for विद्धि). K7 Da3. a4 Ds1 D7. 8. 9 M6 शरीरिणां; Dn4 M7 °रिणः; D4 °रिणे.

16 K1 om. 16ᵃᵇ (cf. v. l. 15). — ᵃ) K6 Bo. 6–9 Da3. a4 क्षीणकोषो; Dn4 °कोपो (for °कोशो). Ś1 ह्यमावस्यां; M7 ह्यमवस्यं. — ᵇ) Da4 प्रकाश्यते; D4 °शने. — ᶜ) K6 Bo. 6–8 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 -विमुक्तोसौ (B6. 8 Da3. a4 °क्तः सन्) (for -वियुक्तः सन्). — ᵈ) D7 T2 G1–3 शरीरे (for °री).

17 D4 om. (hapl.) 17ᵃ–18ᵇ. — ᵃ) K6. 7 B7. 9 Dn1. n4 D2. 3. 6. 9 Cn [आ]काशांतरं; Bo. 6. 8 (marg.) Da3. a4 कोषांतरं (Da3 °रे) (for कोशान्तरं). Dn1 प्राप्तः (for प्राप्य). ❀ Ca: कोशान्तरं तेजोन्तरम्। कोशो मण्डल इत्यपव्याख्यानम्। मण्डलस्य सदास्थितत्वात्। ❀ — ᵇ) G1. 2 राजते (for भ्राजते). — Ś1 K1. 2 D5 om. (hapl.) 17ᶜᵈ. — ᶜ) K7 लिंगं परं (for लिङ्गान्तरं).

18 D4 om. 18ᵃᵇ (cf. v. l. 17). — ᵃ) Ś1 K1. 6

सा तु चन्द्रमसो व्यक्तिर्न तु तस्य शरीरिणः ॥ १८
उत्पत्तिवृद्धिव्ययतो यथा स इति गृह्यते ।
चन्द्र एव त्वमावास्यां तथा भवति मूर्तिमान् ॥ १९
नाभिसर्पद्विमुञ्चद्वा शशिनं दृश्यते तमः ।
विसृजंश्चोपसर्पंश्च तद्वत्पश्य शरीरिणम् ॥ २०
यथा चन्द्रार्कसंयुक्तं तमस्तदुपलभ्यते ।
तद्वच्छरीरसंयुक्तः शरीरीत्युपलभ्यते ॥ २१
यथा चन्द्रार्कनिर्मुक्तः स राहुर्नोपलभ्यते ।
तद्वच्छरीरनिर्मुक्तः शरीरी नोपलभ्यते ॥ २२
यथा चन्द्रो ह्यमावास्यां नक्षत्रैर्युज्यते गतः ।
तद्वच्छरीरनिर्मुक्तः फलैर्युज्यति कर्मणः ॥ २३

C. 12. 7439
B. 12. 203. 23
K. 12. 201. 23

इति श्रीमहाभारते शान्तिपर्वणि षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

---

V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds2 D2. 3. 5–8 T2 G3. 6 M7 जन्मवृद्धिः; K2 °बुद्धि-; K4 °बुद्धिः (for °वृद्धि-). Da4 क्षयस्यास्य; Dn1 D7 G1. 2 क्षयं चास्य; M5 -क्षयाश्चास्य (for -क्षय°). — *b*) Ś1 K1 प्रत्यक्षे नोप°; K2. 4 प्रत्यक्षं नोप°; V1 B6–9 Da3. a4 °क्षमुप- (for °क्षेणोप-). — After 18*ab*, D5 reads 22*cd* for the first time, repeating it in its proper place. Bo repeats 18*c* after 21*ab*. — *c*) D7 T G1–3. 6 M1. 6 च; M7 lacuna (for तु). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 T1 G3. 6 चांद्रमसी (V1 D7 T1 G3. 6 °सो) (for चन्द्रमसो). K1 M7 व्यक्तिं; Bo. 7. 8 (marg. as in text). 9 Da3. a4 Dn1. n4 D2. 3. 5. 6. 8 वृत्तिर्; G1 व्यक्तं (for व्यक्तिर्). — *d*) T2 तं (for तु).

19 *a*) K2. 4. 6 V1 Bo. 6. 7. 9 Dn1. n4 Ds D2. 3. 5. 8 -वयसा; K7 D4. 9 -वयसो; M1. 5–7 -क्षयतो (for -व्ययतो). D6 उत्पत्त्यभिवृद्धिं च (sic). — *b*) K1 गृह्यंते; D7 T1 G1. 2 दृश्यते. — *c*) Dn1 G1 एवं (for एव). Ś1 K1. 6 त्वमावस्यां. — *d*) K7 D5 यथा (for तथा).

20 *a*) K6 Bo Dn1. n4 D2. 3. 6. 8 नोपसर्पद्; B6. 8 (both on marg.) D5 G6 अभि° (for नाभि°). D7 T G1–3 नाभिसर्पन्विमुंचन्वा. — *b*) K1. 2 शशिनो (for °नं). G3 ततः (for तमः). — *c*) D7 T1 G1–3. 6 विसृजेच्चो (D7 °च्चा)पसर्पेच्च; M1. 5–7 °जच्चोपसर्पच्च. — *d*) Da4 तस्य (for पश्य). Da3. a4 D8 G2 शरीरिणां (Da4 °णा; G2 °णः).

21 K7 D4. 9 om. (hapl.) 21. — *a*) D7 T1 G1–3. 6 -संयुक्तो (for °क्तं). — *b*) K1 तपस्तद्; D7 T G1–3. 6 राहुः सन्; M6 तमस्तम् (for °स्तद्). — After 21*ab*, Bo repeats 18*c*. — Ś1 K1. 2. 4 om. (hapl.) 21*cd*. D5 om. (hapl.) 21*c*–22*b*. — *c*) D7 T1 G3. 6 शरीरी (D7 °रि-) (for शरीर-). D7 T G1–3. 6 M1. 5–7 -संयुक्तम् (for °क्तः). — *d*) V1 Bo. 6. 8. 9 Da3. a4 हि (for [इ]ति). D7 T G1–3. 6 M1 अज्ञानमुपलभ्यते; M5–7 ज्ञानं तदुप°.

22 D5 om. 22*ab* (cf. v. l. 21). — *a*) D7 तथा (for यथा). D7 T G1–3. 6 -निर्मुक्तं (for °क्तः). — *b*) Ś1 K1. 2. 4 सत्राहुर्; D7 T G3. 6 तमस्तं; G1. 2 अज्ञानं (for स राहुर्). — G1. 2 om. (hapl.) 22*cd*. D5 reads 22*cd* for the first time after 18*ab*. — *c*) Ds2 M1 शरीरी; D7 °रि- (for °र-). D7 T G3. 6 M1 -निर्मुक्तं. D5 (first time) तद्वच्छरीरिणोयुक्तः (sic). — *d*) D7 T1 G3 अज्ञानं; G6 तज्ज्ञानं (for शरीरी). D5 (first time) शरीरे नोपलभ्यते.

23 *a*) Ś1 K1 ह्यमावस्यां. M1. 6 [s]पि (for हि). — *b*) V1 पुनः; D5 तमः; M7 मृतः (for गतः). — *c*) D7 T1 G3. 6 शरीरी (D7 °रि-) (for शरीर-). — *d*) B6 फलं (for फलैर्). Ś1 K1. 2. 4 युज्येत (for युज्यति). D6. 7 T G1–3. 6 M1. 5–7 कर्मणां (D6 °णा) (for °णः). K7 D4. 5. 9 युज्यते कर्मणः फलैः.

Colophon om. in Da4 (K3. 5 B1–5 Da1. a2 Dn2. n3 D1 G4. 5 M2–4 absent). — *Sub-parvan* : Ś1 K1. 2. 4. 6. 7 Bo. 6–9 Da3 Dn1. n4 Ds D2–4. 6–9 T G1–3. 6 M1. 5–7 मोक्षधर्म. — *Adhy. name* : Ś1 K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3 Dn1. n4 Ds D2–6. 8. 9 मनुबृहस्पतिसंवादः; M1. 5–7 मनुबृहस्पतिसंवादे आत्मस्व(M6. 7 °स)त्वायुक्तिः. — *Adhy. no.* (figures, words or both) : B7 26; Dn1 30; Dn4 D8 D7 T1 G1. 3. 6 M1. 5–7 29; D3 28; T2 G2 43. — *Śloka no.* : Da4 Dn1. n4 D8 23.

# १९७

C. 12. 7440
B. 12. 204. 1
K. 12. 202. 1

मनुरुवाच ।
यथा व्यक्तमिदं शेते स्वप्ने चरति चेतनम् ।
ज्ञानमिन्द्रियसंयुक्तं तद्वत्प्रेत्य भवाभवौ ॥ १
यथाम्भसि प्रसन्ने तु रूपं पश्यति चक्षुषा ।
तद्वत्प्रसन्नेन्द्रियवाञ्ज्ञेयं ज्ञानेन पश्यति ॥ २
स एव लुलिते तस्मिन्यथा रूपं न पश्यति ।
तथेन्द्रियाकुलीभावे ज्ञेयं ज्ञाने न पश्यति ॥ ३
अबुद्धिरज्ञानकृता अबुद्ध्या दुष्यते मनः ।
दुष्टस्य मनसः पञ्च संप्रदुष्यन्ति मानसाः ॥ ४
अज्ञानतृप्तो विषयेष्ववगाढो न दृश्यते ।
अदृष्ट्वैव तु पूतात्मा विषयेभ्यो निवर्तते ॥ ५
तर्षच्छेदो न भवति पुरुषस्येह कल्मषात् ।
निवर्तते तथा तर्षः पापमन्तं गतं यथा ॥ ६
विषयेषु च संसर्गाच्छाश्वतस्य नसंश्रयात् ।

## 197

1 Da4 om. the ref. D5. 7 T G1-3. 6 M1. 5-7 बृहस्पतिः (for मनुः). — [a]) G6 इयं (for इदं). K2 चेत्ये; G1. 2 सर्वं (for शेते). — [b]) Da3 भवति (for चरति). Ś1 K2. 4. 6 चेतनां; K1 चेतनात्; V1 चेतरं; B8 (marg.) Da3 D7 T G1-3. 6 M1. 5-7 चेतरत्; Da4 °रन्; D5 चेतरे (for चेतनम्). ❀ Cn: व्यक्तं स्थूलशरीरम्, चेतनं लिङ्गशरीरम्। ❀ — [c]) Ds2 -युक्तं च (for -संयुक्तं). — [d]) B6 प्राप्य (for प्रेत्य).

2 [c]) K6 Bo. 7. 8 (marg. as in text). 9 Da3. a4 Dn1. n4 D2. 3. 6. 8 प्रसन्नेंद्रियस्वाज् (for °वाञ्). — [d]) Ś1 K1. 2. 4 B8 (marg.) Da3. a4 Ca श्रेयो (for ज्ञेयं). ❀ Ca: श्रेयो मोक्षसाधनम्। ❀ M7 ज्ञाने तु (for ज्ञानेन). ❀ Cp (reading ज्ञानं ज्ञेयेन): ज्ञानमध्यात्मज्ञानम्। ज्ञेयेन तत्त्वेन। ज्ञानेनेति पाठे तत्त्वज्ञानेन। ❀

3 [a]) T2 G2 M1. 5-7 लुळिते; G1 ललिते (for लुलिते). — [b]) B7 तु (for न). — [c]) Ds1 यथा (for तथा). Da4 -भावा (for -भावे). Ś1 K1. 2 तथें(K1 °थें)द्रियाकुले भावे; B6. 8 (marg. as in text) तथेंद्रियाकुलीवान् (submetric); B8 (marg.) °लीते ज्ञेये (sic). — [d]) Ś1 K1. 2 D4 ज्ञानं; V1 B6-9 Da3. a4 D8 ज्ञाता (for ज्ञाने). ❀ Cn: ज्ञाने बुद्धौ। ❀

4 [a]) G1 अज्ञानकृतौ (for °कृता). — [b]) D3 दुष्यते (for अबुद्ध्या). K6 Da3 Dn1. n4 D2. 3. 6. 8 [आ]कृष्यते; T2 G2. 6 M1. 5-7 दूष्यते (for दु°). D6 जनः (for मनः). — [d]) D4 स प्रदुष्यंति; M1. 6 संप्रदूष्यंति. D7 T1 G1-3. 6 मानवाः (for मानसाः). ❀ Cn: मानसाः मनःप्रधानाः। ❀

5 V1 reads 5[a]-6[b] on marg. — [a]) V1 विज्ञान-; Ds2 आज्ञान- (for अज्ञान-). Ś1 K1. 2 -दृष्टो; K7 D9 -वृद्धौ; Bo. 6-8 M7 -दृप्तो; D4 -तृप्ता; D5 -तृप्तौ (for -तृप्तो). — [b]) Ś1 K1. 2. 4 हि (for न). K6 B8 (marg. as in text) Da3 Dn1. n4 Ds2 D2. 3. 5. 6. 8 तृप्यते; K7 Ds1 D4. 7. 9 T G1-3. 6 M5. 7 C8 पश्यति; B6 तृप्यति; B7 दृप्यते (for दृश्यते). ❀ Ca: न दृश्यते कैवल्येन ॥ Cs: न पश्यति, आत्मानमिति शेषः। ❀ — [c]) K4. 6 V1 Bo. 6. 7 Dn1. n4 D8 D2. 3. 8 Cn अदृष्टवच्च; B8 Da3. a4 °ष्ट एव; D5. 7 T G1-3. 6 M7 स दृष्टैव तु (D5 च); D6 अदृष्टवद्धं; M1. 5. 6 तद्दृ(M1 तं द)ष्ट्वैव तु (for अदृ°). K4. 6 V1 Bo. 6-9 Da3. a4 Dn1. n4 D8 D2-6. 8 भूतात्मा; D7 तृप्तात्मा; T1 G1. 2 पूर्वात्मा (for पूतात्मा).

6 V1 reads 6[ab] on marg. — [a]) K6 तमश्छेदो; D4 तद्विच्छेदो; D5. 7 तेषां छेदो; M6 कर्षच्छेदो (for तर्ष°). — [b]) Ś1 K1. 2. 4 च; K7 D4. 9 स (for [इ]ह). D7 T G1-3. 6 किल्बिषात्; M1 कल्मषाः. — [c]) Da4 निवर्तंते; D5 °र्तेत. K4. 6 B6-9 Dn1. n4 D8 D2. 3. 5. 8 T G2. 3. 6 M1. 5-7 तदा; K7 यथा; Da3. a4 तस्य; D7 ततः (for तथा). K7 D4. 9 तृष्णा; D8 तर्षं (for तर्षः). G1 तदा निवर्तते तर्षः; Cv निवर्तते (glossed by पुनः पुनरावर्तते) तथा तर्षा. — [d]) K4. 6. 7 V1 Bo. 6. 7 Da4 D8 D3-7. 9 T1 M1. 6. 7 Kumbh. ed. अंतर्गतं; B8 (orig.) अस्तं गतं; B8 (marg.) Da3 Dn1 D2. 8 T2 अंतगतं (for अन्तं गतं). K4. 6 B6-9 Da3. a4 Dn1. n4 D8 D2. 3. 5-8 T G1-3. 6 M1. 5-7 यदा (for यथा). — After 6, Kumbh. ed. ins.:

534* अन्तर्गतेन पापेन दह्यमानेन चेतसा।
शुभाशुभविकारेण न स भूयोऽभिजायते।

7 [a]) D8 विषयेपि (for °येषु). K4. 6 V1 Bo. 6. 8. 9 Da3 Dn1. n4 D8 D2. 3. 6 तु; Da4 D8 [अ]नु-

मनसा चान्यदाकाङ्क्षन्परं न प्रतिपद्यते ॥ ७
ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।
अथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥ ८
प्रसृतैरिन्द्रियैर्दुःखी तैरेव नियतैः सुखी ।
तस्मादिन्द्रियरूपेभ्यो यच्छेदात्मानमात्मना ॥ ९
इन्द्रियेभ्यो मनः पूर्वं बुद्धिः परतरा ततः ।
बुद्धेः परतरं ज्ञानं ज्ञानात्परतरं परम् ॥ १०

अव्यक्तात्प्रसृतं ज्ञानं ततो बुद्धिस्ततो मनः ।
मनः श्रोत्रादिभिर्युक्तं शब्दादीन्साधु पश्यति ॥ ११
यस्तांस्त्यजति शब्दादीन्सर्वाश्च व्यक्तयस्तथा ।
विमुञ्चत्याकृतिग्रामांस्तान्मुक्त्वामृतमश्नुते ॥ १२
उद्यन्हि सविता यद्वत्सृजते रश्मिमण्डलम् ।
स एवास्तमुपागच्छंस्तदेवात्मनि यच्छति ॥ १३
अन्तरात्मा तथा देहमाविश्येन्द्रियरश्मिभिः ।

C. 12. 7453
B. 12. 204. 14
K. 12. 202. 17

---

( for च ). — b) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 तु संश्र( Ds D3. 6. 8 °श )यात्; K7 D4. 9 च वर्जनात्; B8 (marg.) त्वसंश्रयात्; D5. 7 T G1–3. 6 M1. 5–7 च संश° ( D5 संश्र° ) ( for न संश्र° ). — c) D4 वा ( for च ). K2. 6 Bo Dn1. n4 Ds D2. 3. 6. 8 चा- ( Dn1 D8 वा )न्यथा कांक्षन्; V1 चान्यमा° ( for चा-न्यदा° ). B7–9 Da3. a4 मनसार्थान्मुदा( B7 °न्यथा-; Da3. a4 °न्यदा )कांक्षन्. — d) Cv न स भूयो हि जायते.

8 a) G3. 6 उत्पाद्यते. D7 T G1–3. 6 M1. 5–7 पुंसः ( for पुंसां ). — c) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 Cs यथादर्श-; D7 T G1–3. 6 M1. 5–7 त( G2 य )दा° ( for अथा° ). K6 Da3. a4 Dn1. n4 D3. 8 M6 Cn -तले प्रख्ये ( K6 °ख्यं ) ( for -तलप्रख्ये ). — d) K1. 2 पश्यंति. ❀ Cn: प्रख्ये स्वच्छे। आत्मनि बुद्धौ। ❀

9 a) B7 om. from प्रसृतै up to मनः ( in 10a ). Bo प्रश्रितैर्. — K1 om. ( hapl. ) 9b. — b) B3. 9 D5 नियतः ( for °तैः ). — c) Ds1 इंद्रियं ( for °य- ). D7 T G1–3. 6 M1. 5–7 -चोरेभ्यो ( for -रूपेभ्यो ). — d) K1. 2 गच्छेद्; B6 ( marg. ) पश्येद्; D7 T G1–3. 6 M1. 5–7 रक्षेद् ( for यच्छेद् ).

10 B7 om. up to मनः ( cf. v. l. 9 ). — b) K4 परतरस्; Da4 °तरां; D2. 3 पूर्वतरा ( for पर° ). Dn4 बुद्धिः पूर्वं परं मनः. — c) D9 परतनं; Cs °तरं ( as in text ). Da3 ज्ञानाद्; Dn4 परं ( for ज्ञानं ). ❀ Cn: ज्ञानं जीवात्मा। ❀ — d) B6 ( marg. as in text ). 7. 8 Da3 D5. 7 T G1–3. 6 M1. 5–7 सूक्ष्मतरं ( for परतरं ). K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 Cn महत् ( glossed by परमात्मा ); K7 D5. 9 तु यत् ( for परम् ).

11 D7 T G1–3. 6 M1. 5–7 repeat 11ab after 18. — a) G1 M1. 6 ( all second time ) अव्यक्तं; M7 ( first time ) अव्यक्त- ( for °क्तात् ). D4 प्रसृतं; D5 प्रष्टतं; G2 ( second time ) प्रसुतं ( for प्रसृतं ). ❀ Cn: अव्यक्तात् शुद्धचिन्मात्रात्। ❀ — b) G3 ( first time ) नमः ( for मनः ). — c) G3 नमः ( for मनः ): T1 युक्तः ( for युक्तं ). D5 श्रोत्रादिभिर्मनो युक्तं.

12 a) K1 D4 तास्. K7 सृजति ( for त्य° ). K2. 4 शब्दादीर्. — b) K6 सर्वांश्च. K7 [अ]व्यक्तयस् ( for व्य° ). Bo G3 तदा ( for तथा ). Ś1 K1. 2. 4 व्यक्तीः सर्वास्तथैव च. ❀ Ca: व्यक्तीरित्यर्थे व्यक्तय इति वचन-[?विभक्ति]व्यत्ययः। व्यक्तिः शरीरादिः॥ Cn: व्यक्तयः व्यक्तीः शब्दाद्याश्रयभूतानि वियदादीनि कारणशरीराणि। ❀ — After 12ab, Kumbh. ed. ins.:

535* प्रसृतानीन्द्रियाण्येव प्रतिसंहरति कूर्मवत् ।

— c) K7 आकृतिं ( for °ति- ). K4 D7 T G1–3. 6 M5 -ग्रामं ( for -ग्रामांस् ). K6 B7 Dn1. n4 Ds2 D2. 3. 6. 8 विमुंचेत्प्राकृतान्ग्रामांस्; Bo. 9 Ds1 °चन्प्राकृतिग्रा- ( Ds1 °तान्ग्रा )मांस्; D5 °चत्प्रकृतिग्रामांस्. — d) Da4 तान्मुक्त्वा; D7 T1 G1–3. 6 तन्मुक्तो; T2 M5 तं मुक्त्वा ( for तान्मुक्त्वा ). Dn4 [अ]च्युतम् ( for [अ]मृतम् ). K7 D4. 5. 9 आप्नुयात् ( for अश्नुते ).

13 a) K1. 7 उद्यद्धि; K4 उष्णं तु ( for उद्यन्हि ). — b) D2. 3 सविता ( for सृजते ). D7 रवि- ( for रश्मि- ). Ds1 -मंडनं ( for °लम् ). — After 13ab, Kumbh. ed. Cv ins.:

536* दृश्यते मण्डलं तस्य न च दृश्येत मण्डली ।
तद्वद्देहस्तु संदृश्य आत्मादृश्यः परः सदा ।
ग्रस्तं ह्युद्गिरते नित्यमुद्गीथं वेत्ति नित्यशः ।
बाल्ये रथाभ्यां योगेन तत्त्वज्ञानं तु संमतम् ।

[ ( L. 4 ) ❀ Cv: रथाभ्यां रथस्थानीयाभ्यां स्थूलदेहलिङ्गदेहाभ्याम्। यः अपेतः विकोशवान् प्राकृतदेहरहितः। ❀ ]

— c) M7 [अं]तम् ( for [अ]स्तम् ). K4 उपागच्छेस्; Da3 Dn4 अपागच्छंस् ( for उपा° ). — d) D7 T1 G1–3. 6 तमेव ( for तदेव ). — After 13, Kumbh. ed. ins.:

537* आदत्ते सर्वभूतानां रसभूतं विकासवान् ।

# २१३

C. 12. 7984
B. 12. 220. 1
K. 12. 225. 1

युधिष्ठिर उवाच ।
किं कुर्वन्सुखमाप्नोति किं कुर्वन्दुःखमाप्नुते ।
किं कुर्वन्निर्भयो लोके सिद्धश्चरति भारत ॥ १
भीष्म उवाच ।
दममेव प्रशंसन्ति वृद्धाः श्रुतिसमाधयः ।
सर्वेषामेव वर्णानां ब्राह्मणस्य विशेषतः ॥ २
नादान्तस्य क्रियासिद्धिर्यथावदुपलभ्यते ।
क्रिया तपश्च वेदाश्च दमे सर्वं प्रतिष्ठितम् ॥ ३
दमस्तेजो वर्धयति पवित्रं दम उच्यते ।
विपाप्मा निर्भयो दान्तः पुरुषो विन्दते महत् ॥ ४
सुखं दान्तः प्रस्वपिति सुखं च प्रतिबुध्यते ।
सुखं लोके विपर्येति मनश्चास्य प्रसीदति ॥ ५
तेजो दमेन ध्रियते न तत्तीक्ष्णोऽधिगच्छति ।
अमित्रांश्च बहून्नित्यं पृथगात्मनि पश्यति ॥ ६
क्रव्याद्भ्य इव भूतानामदान्तेभ्यः सदा भयम् ।
तेषां विप्रतिषेधार्थं राजा सृष्टः स्वयंभुवा ॥ ७
आश्रमेषु च सर्वेषु दम एव विशिष्यते ।
यच्च तेषु फलं धर्मे भूयो दान्ते तदुच्यते ॥ ८

---

## 213

☞ The subject-matter of this adhy. is allied to that of 12. 154.

1 $^a$) Ś1 K1. 2. 4 दुःखम् (for सुखम्). — $^b$) Ś1 K1. 2. 4 सुखम् (for दुःखम्). Ś1 K1. 2. 4 T2 अश्नुते; K6. 7 V1 Bo. 6-9 Da3 Dn1. n4 Ds D2-6. 8. 9 आप्नुयात्; M5. 6 आवसेत् (for आप्नुते). Da4 कुर्वन्दुःखमवाप्नुयात्. — $^c$) Ś1 K1 अभयो (for निर्भयो). — $^d$) Da4 भारतः.

2 With 2, cf. 12. 154. 7. Da4 om. the ref. — $^a$) K7 दम; Da4 Ds इमम्; D6 इदम् (for दमम्). — 2$^{bcd}$ is damaged in B7. — $^b$) D7 T1 G1-3. 6 विप्राः (for वृद्धाः). Ś1 K1. 2. 4. 7 D9 श्रुत- (for श्रुति-). K1 -समादयः; K6 D4. 5 °हिताः; Da4 °श्रयः (for °धयः). ❀ Cn: श्रुतिसमाधयः वेदद्रष्टारः ॥ Cp: श्रुतौ वेदान्ते समाधिश्चित्तैकाग्र्यं येषाम् । ❀ — $^d$) B9 ब्राह्मणानां (for °णस्य).

3 3$^{ab}$ = 12. 154. 8$^{ab}$. — $^a$) B7 damaged; D6 नादंतस्य; D8 नातातस्य (for नादान्तस्य). — $^b$) K6. 7 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2-6. 8. 9 -पद्यते (for -लभ्यते). — D5 reads 3$^c$-4$^b$ after 5$^{ab}$. — $^c$) D7 T G1-3. 6 M7 क्रियास् (for क्रिया). V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 सत्यं; D7 G1. 2 देवाश् (for वेदाश्). K7 क्रियते यश्च वेदाश्च. — $^d$) Da4 सर्वे (for सर्वं).

4 = (var.) 12. 154. 9. For the sequence in D5, cf. v. l. 3. — $^a$) G1 विवर्धयति (hypermetric) (for वर्धयति). — $^b$) Da4 D4 मद (for दम). D4 उद्यते (for उच्यते). D5 दमो वर्धयते यशः. — $^c$) K6 D4. 9 विभयो (for निर्भयो).

5 = (var.) 12. 154. 12. — $^a$) Ś1 K1. 2 प्रस्वपति (for °पिति). K7 D4. 9 सुखं च दांतः स्वपिति. — $^b$) Da4 -बुध्येते; D7 T1 G1. 3. 6 -पद्यते; T2 -बोध्यते (for -बुध्यते). — After 5$^{ab}$, D5 reads 3$^c$-4$^b$. — $^c$) K7 D4 सुख- (for सुखं). K6. 7 B6 D3. 4. 6. 9 G2 लोकं (for लोके). K1 [ऽ]पि पर्येति; K2 [ऽ]धिप° (for विप°). ❀ Ca: विपर्येति विशेषतः संचरति । ❀

6 $^a$) Da4 मदेन (for दमेन). B7 damaged; Da4 ध्रीयते; D4 ध्रियते; D9 त्रियते; T2 भ्रियते (for ध्रि°). — $^b$) K1 G1. 2 न तं; K4 Da3. a4 Dn4 Ds D2. 5. 6. 8 तत्र; V1 Bo. 6. 8. 9 Dn1 D3 तन्न (by transp.); B7 damaged. K7 D9 दांतो (for तीक्ष्णो). K6 न गच्छति (for ऽधिग°). — $^c$) D5. 7 अमित्राश्; T2 °तांश्; G1 °त्रं (for °त्रांश्). — $^d$) D4 om. from पृथगा up to राजा सृ (in 7$^d$). V1 दृश्यते (for पश्यति).

7 D4 om. up to राजा सृ (cf. v. l. 6). — $^b$) D6 अदांतेभ्यः प्रसीदति. — $^c$) K7 D9 तेषां विप्रतिषेधाय; B6-9 Da3. a4 तेषां प्रतिनिषेधार्थं. — $^d$) Da4 पृष्टः; M7 सृष्टिः (for सृष्टः).

8 With 8$^{ab}$, cf. 12. 154. 14$^{ab}$. — $^a$) Ds1 धर्मेषु (for सर्वेषु). — $^b$) Ds1 वम (for दम). — After 8$^{ab}$, Kumbh. ed. ins.:

तेषां लिङ्गानि वक्ष्यामि येषां समुदयो दमः ।
अकार्पण्यमसंरम्भः संतोषः श्रद्दधानता ॥ ९
अक्रोध आर्जवं नित्यं नातिवादो न मानिता ।
गुरुपूजानसूया च दया भूतेष्वपैशुनम् ॥ १०
जनवादमृषावादस्तुतिनिन्दाविवर्जनम् ।
साधुकामश्चास्पृहयन्नायाति प्रत्ययं नृषु ॥ ११
अवैरकृत्सूपचारः समो निन्दाप्रशंसयोः ।
सुवृत्तः शीलसंपन्नः प्रसन्नात्मात्मवान्बुधः ।
प्राप्य लोके च सत्कारं स्वर्गं वै प्रेत्य गच्छति ॥ १२
सर्वभूतहिते युक्तो न स्मयाद्द्वेष्टि वै जनम् ।
महाह्रद इवाक्षोभ्य प्रज्ञातृप्तः प्रसीदति ॥ १३
अभयं सर्वभूतेभ्यः सर्वेषामभयं यतः ।
नमस्यः सर्वभूतानां दान्तो भवति ज्ञानवान् ॥ १४
न हृष्यति महत्यर्थे व्यसने च न शोचति ।

C. 12. 7989
B. 12. 220. 16
K. 12. 225. 16

---

625* धर्मः संरक्ष्यते दैस्तु यतस्ते धर्मसेतवः ।

— $^{c}$) K1 यश्च. V1 धर्म- (for तेषु). K6.7 D4.9 धर्म्यं; Dn4 M1 धर्मं; D6 T1 G3.6 धर्मो; M7 धर्म्यो (for धर्मं). — $^{d}$) K1 Da4 उच्यंते. K7 D4.9 भूयो दांतेषु चोच्य( K7 D4 बोध्य )ते; V1 भूयो दांते विशिष्यते; D5 भूयो दांतेषु लभ्यते.

9 $9^{ab}$ = (var.) 12. 154. $14^{cd}$. — $^{a}$) D7 T1 G1–3.6 M1.5–7 वक्ष्यामि लिंगानि (by transp.). — $^{b}$) K6 समुदयेद्; T1 G1 °दये (for °दयो). — $9^{cd}$ = (var.) 12. 154. $16^{ab}$. — $^{c}$) ❀ Ca: असंरम्भोऽनभिनिवेशः । ❀

10 $^{a}$) D5.7 अक्रोधम् (for °ध). T1 आर्जवो. V1 चेति; M5.6 सत्यं (for नित्यं). — $^{b}$) K7 चातिवादो; B8 अभिवादो; Ds1 वाभि°; T2 नातिमानो (for °वादो). V1 Bo.6.9 Dn1.n4 Ds D2.3.6 M1 [ऽ]भिमानिता; D5 [ऽ]धि°; T G1.3.6 M5–7 विमा° (for न मा°). — $10^{cd}$ = (var.) 12. 154. $17^{ab}$. — $^{c}$) K2.4 सदा कार्या; K6 D5 [अ]नुसूया.

11 $11^{ab}$ = (var.) 12. 154. $17^{cd}$. T G1–3.6 om. $11^{ab}$. — $^{a}$) K6 क्रूरवादो; Ds1 M1.5 जनवादो (M5 °दे); D7 ऋतवाचो (for जनवाद-). K1 Ds D5.7 -मृषावादः (for °वाद-). ❀ Cn: जनवादो राजादिवार्ता । ❀ — $^{b}$) K2 -विवर्जितः; K4 °र्जिताः; B3 (before corr.) °र्जितं; Da3.a4 -निवर्तनं (for -विवर्जनम्). — $^{c}$) Ś1 K1.2.4 साध्वाचारश्च; K7 D4.9 G1 साधुकामांश्च; B8 (marg.) Da3.a4 Ca °कारं; Cap °कामश्च (as in text). K6 B9 Dn1.n4 D2.3.8 च स्पृहयेन्; K7 V1 Bo.6–8 Ds D4.6.9 G1 च स्पृहयन्; D5.7 स्पृहा चैव (for चास्पृहयन्). G2 साधुकामापयास्पृहयन् (sic). — $^{d}$) K4 V1 Bo Dn1.n4 D2.3.6.8 Cn नायतिं; K6 नायत्यां; B6–8 D5.7 नानृते; B9 Cp आयति-; Da3 Ds T G1–3.6 M1.5–7 Ca नायति-; Da4 तापति (for नायाति). K6 V1 Bo.6–9 Da3.a4 Ds D5–7 T G1–3.6 M5.6 प्रत्ययो नृषु; Dn1.n4 D2.3.8 प्रत्ययेषु च (for °यं नृषु). ❀ Ca: आयतौ उत्तरकाले प्रत्ययोऽस्येति आयतिप्रत्ययः । आयतिमान्प्रत्ययोऽस्येति दीर्घदर्शी वा ॥ Cn: नायतिं प्रत्ययो नृषु इति पाठे फलसंवादेन विश्वस्तो नृषु आदरं न कुर्यात् किंतु प्रागेवाकृतकार्येषु साधुष्वविश्वासो न कर्तव्य इत्यर्थः ॥ Cp: आयत्यामुत्तरकाले प्रत्ययः, तदात्वे दुःखसहिष्णुता ॥ Cs: आयतिप्रत्ययः दीर्घदर्शी । ❀

12 $^{a}$) G2 सोपचारः (for सूप°). Da4 अवैकृतं रूपचारः. — With $12^{cdef}$, cf. 12. 154. 23. — $^{c}$) K6.7 D4.5.7.9 सद्वृत्तः (K7 °त्त-); B6 स्ववृत्तः; Da4 T2 सुवृत्त-; M1 सुवृत्ति- (for °त्तः). — $^{d}$) K6.7 Bo.6–9 Da3.a4 Dn1.n4 Ds D2–9 प्रभुः; V1 T G1–3.6 M1.5–7 शुचिः (for बुधः). — $^{e}$) K7 D5.9 संस्कारं; D6 सत्कार्यं (for °रं). M1 प्राप्येह लोके सत्कारं. — After 12, K6 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.5–8 Cn Kumbh. ed. ins.:

626* दुर्गमं सर्वभूतानां प्राप्य यन्मोदते सुखी ।

[ V1 Da3 Dn1.n4 D2.8 Cn Kumbh. ed. प्रापयन्, (Cn supplying अन्नादि as object).]

13 $^{a}$) Da3.a4 युक्ता (for युक्तो). — $^{b}$) K4.6.7 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2–9 T G1–3.6 M1.5–7 न (T2 G1.2 ना) स यो (for न स्मयाद्). K4 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.6.8 T G1–3.6 M1.5–7 द्विषते (D8 °तो) (for द्वेष्टि वै). ❀ Cn: स इति पृथक्पदम् । ❀ — $^{c}$) Da3.a4 D6 महाद्रुम (for °ह्रद). — $^{d}$) T1 G1–3.6 प्राज्ञस् (for प्रज्ञा-). M7 -तृप्तिः (for -तृप्तः). Da4 प्रशीदंति; Ds T G1–3.6 M1.5–7 प्रसिध्यति (for प्रसीदति).

14 With $14^{ab}$, cf. 12. 154. $26^{ab}$; 185. $4^{ab}$. V1 reads $14^{a}$–$15^{b}$ on marg. — $^{a}$) Dn1 प्रभयं (for अ°). K6.7 V1 Bo.7.8 (marg.) Da4 Dn1.n4 Ds

C. 12. 7989
B. 12. 220. 16
K. 12. 225. 16

स वै परिमितप्रज्ञः स दान्तो द्विज उच्यते ॥ १५
कर्मभिः श्रुतसंपन्नः सद्भिराचरितैः शुभैः ।
सदैव दमसंयुक्तस्तस्य भुङ्क्ते महत्फलम् ॥ १६
अनसूया क्षमा शान्तिः संतोषः प्रियवादिता ।
सत्यं दानमनायासो नैष मार्गो दुरात्मनाम् ॥ १७
कामक्रोधौ वशे कृत्वा ब्रह्मचारी जितेन्द्रियः ।
विक्रम्य घोरे तपसि ब्राह्मणः संशितव्रतः ।
कालाकाङ्क्षी चरेल्लोकान्निरपाय इवात्मवान् ॥ १८

इति श्रीमहाभारते शान्तिपर्वणि त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥

---

D2–5. 7–9 M1. 7 यस्य (for सर्व-). —b) K6. 7 D4. 5. 9 भूतानाम् (for सर्वेषाम्). B9 पुनः; M7 (*sup. lin.* as in text) ·करः (for यतः). —d) K6. 7 D4. 5. 7. 9 धर्मवित्; B0 Dn1. n4 Ds D2. 3. 6. 8 बुद्धिमान्; T G1–3. 6 M1. 5–7 मानवः (for ज्ञानवान्).

15 V1 reads 15ab on marg. —a) K6 हृष्येत; T1 G1–3. 6 प्रहृष्येत् (for हृष्यति). —b) B9 Da4 transp. च and न. K6 शोचते. —c) K6 D4. 9 सदा; K7 तदा; Da3. a4 यो वै (for स वै). K3 परिमिता (for °मित-). K1 ·प्राज्ञः (for ·प्रज्ञः). D7 सदा परमिदं प्राज्ञः; T G1–3. 6 M5–7 यश्चा (T2 M5–7 स चा) परिमितप्रज्ञः. —d) Da4 प्रदांतो (for स दान्तो).

16 a) K7 V1 B8 D4. 9 T2 G1. 2 M7 (*sup. lin.*) श्रुति-; G3. 6 शुचि-; M1. 7 (orig.) शुभ- (for श्रुत-). —b) Da3. a4 Dn1. n4 D8 आचरितः (Da4 °रते) (for °रितैः). B0 Da3 Dn1. n4 Ds D2. 3. 6. 8 शुचिः (for शुभैः). —c) T2 स दैवे (for सदैव). Da4 मद- (for दम-). —d) Ś1 (by corr.) K1 सोम्य (for तस्य). K4 भुंक्ष्वे; Da3. a4 तुक्तं (for भुङ्क्ते). Ś1 K1. 2. 4. 6. 7 Dn1. n4 Ds D2–9 महाफलं (for महत्फलम्).

17 a) K7 अनुसूया. —c) Ś1 K1. 2 T1 G1–3. 6 सत्त्वं; B8 (marg. as in text) T2 M1. 5–7 सांत्वं; Cp (Cpp as in text) श्रद्धा (for सत्यं). —d) Ś1 (*sup. lin.* as in text) K2. 4 दुरात्मवान्; G3. 6 °त्मना (for °त्मनाम्). — After 17, K6. 7 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G1–3. 6 M1. 5–7 Kumbh. ed. ins.:

627* कामक्रोधौ च लोभश्च परस्येर्ष्या विकत्थना ।

[K6 Ds1 T G1–3. 6 कामः क्रोधश्च (K6 °धौ च) लोभश्च (for the prior half). K6 Da3. a4 Dn1. n4 Ds1 D2. 3 M7 परस्येर्षा; T2 मोहास्तेषां; G1. 2 परस्यैषा (for °स्येर्ष्या). K6 विकल्पना; K7 D4. 9 °त्थनं; Da3. a4 °त्थने (for °त्थना).]

T1 G1–3. 6 M5. 6 cont.:

628* दम्भो दर्पश्च मानश्च नैष मार्गो महात्मनाम् ।

[T1 G3. 6 डंभो (for दम्भो).]

For 628*, Kumbh. ed. subst.:

629* अतुष्टिरनृतं मोह एष मार्गो दुरात्मनाम् ।

18 b) K6 ब्रह्मवादी; Da4 °चारि. —c) Dn1 D4 घोर- (for घोरे). K4. 6 Dn1. n4 Ds1 D2. 3 (by corr.). 6. 8 तमसि (for तपसि). —d) K7 D3. 4. 7. 9 शंसित- (for संशित-). —e) Ś1 T2 G2. 3. 6 M1. 6 कालकांक्षी; Cp काला° (as in text). —f) D4 निपारय (for निरपाय). T1 G1–3. 6 M5–7 इह (for इव). Ś1 K1. 2. 4 V1 B8 (marg.) आत्मनः; B6 (marg. as in text). 7. 8 (orig.) Da3. a4 आत्मनि (for °वान्). D6 निष्पाप इव चात्मनः. ❀ Cp: निरपायः मनोदौःस्थ्यरहितः । ❀

Colophon. — *Sub-parvan:* Ś1 K1. 2. 4. 6. 7 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2–4. 6–9 T G1–3. 6 M1. 5–7 मोक्षधर्म. — *Adhy. name:* Ś1 K1. 2. 4. 6. 7 V1 B0. 7–9 Da3 Dn1 Ds D2–6. 8. 9 दांताध्यायः; Da4 दानाध्यायः; M1. 7 दमस्तुतिः; M5. 6 दमप्रशंसनं. — *Adhy. no.* (figures, words or both): Dn1 D7 T1 G1. 3. 6 M5 47; Dn4 Ds2 D3 46; Ds1 48; T2 G2 61; M1. 6. 7 45. — *Śloka no.:* Dn1. n4 Ds1 D8 20.

# २१४

युधिष्ठिर उवाच ।
द्विजातयो व्रतोपेता यदिदं भुञ्जते हविः ।
अन्नं ब्राह्मणकामाय कथमेतत्पितामह ॥ १
भीष्म उवाच ।
अवेदोक्तव्रतोपेता भुञ्जानाः कार्यकारिणः ।
वेदोक्तेषु च भुञ्जाना व्रतलुप्ता युधिष्ठिर ॥ २
युधिष्ठिर उवाच ।
यदिदं तप इत्याहुरुपवासं पृथग्जनाः ।
एतत्तपो महाराज उताहो किं तपो भवेत् ॥ ३
भीष्म उवाच ।
मासपक्षोपवासेन मन्यन्ते यत्तपो जनाः ।
आत्मतन्त्रोपघातः स न तपस्तत्सतां मतम् ।
त्यागश्च सन्नतिश्चैव शिष्यते तप उत्तमम् ॥ ४
सदोपवासी च भवेद्ब्रह्मचारी सदैव च ।
मुनिश्च स्यात्सदा विप्रो दैवतं च सदा भजेत् ॥ ५
कुटुम्बिको धर्मकामः सदास्वप्नश्च भारत ।

C. 12. 8009
B. 12. 221. 6
K. 12. 226. 6

## 214

☞ This adhy. = (var.) B. 13. 93. 1–17, the v. l. from which are given in App. II (No. 3).

1 $^{a}$) G1 व्रतोभूता (for °पेता). — $^{c}$) B8 (marg.) अद्य (for अन्नं). K1 ब्राह्मण्य- (for °ण-). G2 -कामाश्च (for -कामाय). ❀ Ca: ब्राह्मणकामाय ब्राह्मणेच्छानुरोधात् ॥ Cs: अस्मिन् दैवे पैत्र्ये वा क्षणः कर्तव्य इति ब्राह्मणावेक्षया । ❀ — $^{d}$) G3 पितामहः.

2 $^{a}$) K6 D3. 5–7 द्विजातयो; B6 (marg. as in text). 8 (marg.) अवेदोक्तैर् (for °दोक्त-). K2 -व्रतापेता; Ds1 D9 T2 -व्रतोपेते (D9 °तां); M1 °पेतो (for °पेता). — $^{b}$) B9 युंजानाः; D7 भुंजानः. V1 काम्य-; B9 Da3. a4 T G1–3. 6 M1. 5–7 Ca. Cpp. Cs काम-; D5. 7 कर्म- (for कार्य-). Da4 G1 -रूपिणः; T G2. 3. 6 M5. 6 Cs -चारिणः (for -कारिणः). ❀ Ca. n: कार्यकारिणः कामाचरवन्तः ॥ Cp: कार्यकारिणः अभीष्टसंपादकाः । ❀ — D5 reads 2$^{c}$ twice. — $^{c}$) D3 T2 M5–7 तु (for च). D7 भुंजानो. G3. 6 देवयुक्तेषु भुंजाना. — $^{d}$) K4 व्रतलुप्ते; K6. 7 B3 (marg.). 7. 8 (marg.) Dn1 Ds1 D2–7 °लुब्धा; Bo T G1–3. 6 M1. 5–7 °युक्ता (for °लुप्ता). ❀ Ca: व्रतलुप्ताः लुप्तव्रता एवेत्यर्थः । व्रतमुक्ताः व्रतलुब्धा इति च पाठे पूर्वापरवाक्ययोः प्रश्नानुगतत्वमाकुलमिव ॥ Cn: व्रतलुब्धाः दीक्षोक्तफलानुरागिणः स्वर्गं प्राप्य पतिष्यन्तीत्यर्थः । ❀ — After 2, K7 D4. 9 ins.:

630* उपेतव्रतशौचा ये भुञ्जन्ते ब्राह्मणाः क्वचित् ।
तदन्नममृतं भूत्वा यजमानं प्रपद्यते ।

3 D7 om. 3. T1 G1. 2 om. the ref. — $^{a}$) Dn4 तपम्. — $^{b}$) T2 उपवास्यं. — $^{c}$) K7 महाप्राज्ञ; M5–7 °भाग (for °राज). — $^{d}$) T1 G1. 2 नातोन्यत्तु; T3 G3. 6 उताहोन्यत् (for °हो किं).

4 D5. 7 T1 G1–3. 6 om. the ref. — $^{a}$) K6. 7 D4. 5. 7. 9 पक्षमासोपवासेन; Dn4 वासयज्ञो°. — $^{b}$) Ds1 मन्यते. Bo. 9 Ds1 M5. 6 ये तपो; D5. 7. 9 यतयो (for यत्तपो). — $^{c}$) K6 आत्मा- (for आत्म-). D7 -मंत्रोप- (for -तन्त्रोप-). K4. 6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 तु; D7 T1 G3. 6 सन् (for स). ❀ Ca: आत्मतन्त्रं आत्मप्रशासकं शास्त्रं, तत्र प्रतिपादितं प्राणायामादि नित्यनैमित्तिकादि च, तन्त्रमिव साधकत्वादात्मज्ञानस्य ॥ Cn: आत्मतन्त्रं आत्मविद्या ॥ Cp: तन्त्र्यते ज्ञायते येन तत् प्राणायामादि प्रणवजपादि वा ॥ Cs: आत्मतन्त्रोपघातः शरीराख्यधर्मपरिकरपीडनम् ॥ Cv (reading आत्मतन्त्रोपघातस्य): आत्मनस्तन्त्रेण उपायेन उपघातस्य परघातकस्य । आत्मनः परमात्मनः, तन्त्रं पूजा, तस्योपघातस्य उपघातकस्य । उपवासव्याजेन देवब्राह्मणपूजादिनित्यनैमित्तिककर्मत्यागिनः । ❀ — $^{d}$) K1 समं; Da4 lacuna (for सतां). Da4 मते (for मतम्). Da3 न त*स्तपसां मतं; D5. 7 न तपः संमतं सतां. — $^{e}$) T G1. 3. 6 संततिश् (for सन्न°). T G1–3. 6 M1. 5–7 चापि (for चैव). ❀ Ca: त्यागः मानसो विषयस्य रागत्यागः । सन्नतिर्विनीतत्वं शास्त्रोपदेशनिष्ठत्वम् ॥ Cn: भूतभयंकरकर्मसंन्यासस्त्यागः । सन्नतिः भूताराधनम् ॥ Cp: त्यागः रागादेः । सन्नतिर्विनीतत्वम् ॥ Cs: त्यागः कर्मफलत्यागः । सन्नतिरनहंकारः । ❀

5 $^{a}$) K4. 6 Bo Da3 Dn1. n4 Ds D2 3. 5. 7. 8 स (for च). — $^{b}$) K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G1–3. 6 M1. 5–7 सदा भवेत् (for सदैव च). — B9 om. (hapl.) 5$^{cd}$. — $^{d}$) K4. 6. 7 V1 Bo. 6–8

C. 12. 8010
B. 12. 221. 7
K. 12. 226. 7

अमांसाशी सदा च स्यात्पवित्रं च सदा जपेत् ॥ ६
अमृताशी सदा च स्यान्न च स्याद्विषभोजनः ।
विघसाशी सदा च स्यात्सदा चैवातिथिप्रियः ॥ ७
युधिष्ठिर उवाच ।
कथं सदोपवासी स्याद्ब्रह्मचारी कथं भवेत् ।
विघसाशी कथं च स्यात्सदा चैवातिथिप्रियः ॥ ८
भीष्म उवाच ।
अन्तरा प्रातराशं च सायमाशं तथैव च ।
सदोपवासी च भवेद्यो न भुङ्क्ते कथंचन ॥ ९
भार्यां गच्छन्ब्रह्मचारी ऋतौ भवति ब्राह्मणः ।
ऋतवादी सदा च स्याज्ज्ञाननित्यश्च यो नरः ॥ १०
अभक्षयन्वृथामांसममांसाशी भवत्युत ।

---

Da3. a4 Dn1. n4 Ds D2-9 T G1-3. 6 M1. 5-7 भवेत् ( for भजेत् ).

6 K7 D4. 9 om. (hapl.) 6. $6^{ab}$ is damaged in B7. — $^{a}$ ) Ś1 K1. 2 कौटुंबिको; T1 G1. 3. 6 M1. 5-7 कुटुं°; T2 कुटुंबी वा; G2 कुर्डि*को ( for कुटुम्बिको ). T G1-3. 6 M5. 6 Cs धर्मपरः; M7 ( *sup. lin.* ) °करः ( for °कामः ). K4 कौटुंबिधर्मकामः सन्. ❀ Cs: धर्मपरः तडागायतनादिनिर्माणयुक्तः । ❀ — $^{b}$ ) K2 सदासुखश्च ( for °स्वप्नश्च ). Da4 भारतः. — $^{c}$ ) K6 Bo. 8 Dn1. n4 D2. 3. 6. 8 अमांसादी; Da3. a4 अप्रमादी ( Da4 °दि ) ( for अमांसाशी ). D6 चेत् ( for च ). — K2. 4 om. ( hapl. ) $6^{d}$–$7^{c}$. G1 om. ( hapl. ) $6^{d}$–$7^{a}$. Ś1 reads $6^{d}$–$7^{c}$ on marg. — $^{d}$ ) Dn1. n4 D2. 5. 7. 8 M1 पवित्रश्च; Ds T G2. 3. 6 M5-7 Cs °त्री ( for °त्रं ). K6 V1 Bo. 7. 8 ( marg. as in text ) Dn1. n4 Ds D2. 3. 5-8 T G2. 3. 6 M1. 5-7 Cs भवेत् ( for जपेत् ). ❀ Cp : पवित्रम्, ॐकारादि । ❀

7 K2. 4 om. $7^{abc}$; G1 om. $7^{a}$ ( for both, cf. v. l. 6 ). Ś1 reads $7^{abc}$ on marg. — $^{a}$ ) K6 स स्यात्; G2 वा स्यान्; G2 ( also ) चैव ( for च स्यान् ). — V1 reads $7^{b}$ on marg. — $^{b}$ ) B9 स; T1 G1. 2 M7 तु ( for च ). K1 D4 विषभाजनः ( for °भोजनः ). K6 सदा चैवातिथिव्रतः; Bo Dn1. n4 Ds D2. 3. 6. 8 देवतातिथिपूजकः. — $^{c}$ ) Da4 G1 विघासाशी; D1 विषसाःशी ( sic ). K1 कथं ( for सदा ). — $^{d}$ ) V1 Bo. 6. 7. 9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 °व्रतः ( for °प्रियः ). K6 देवतातिथिपूजकः. — After 7, K6 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 5-8 Kumbh. ed. ins.:

631* श्रद्दधानः सदा च स्याद्दैवतद्विजपूजकः ।

[ K6 सदैव ( for सदा च ). K6 V1 Da3 Dn1 Ds D7 Kumbh. ed. देवता- ( Da3 D7 °त- ); Da4 दैवतः ( for °त- ). D7 -रक्षकः ( for -पूजकः ). ]

8 $^{b}$ ) T1 om. ( hapl. ) from ब्रह्म up to कथं च ( in $8^{c}$ ). K1 ब्रह्मचारि. G2 M5 सदा ( for कथं ). — $^{c}$ ) D4. 9 अमांसाशी ( for विघ° ). D7 G1 सदा ( for कथं ). G1 वा ( for च ). — $^{d}$ ) K7 D4. 9 M1. 5. 6 कथं ( for सदा ). K6 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 -व्रतः ( for -प्रियः ).

9 $^{a}$ ) D5 प्रातराशी; D7 T1 °राशश्च; T2 °राशिश्च ( for °राशं ). — $^{b}$ ) K6 Bo सायमासं; D5. 7 °माशी; T2 °माशस् ( for °माशं ). Ś1 K1. 2. 4 च भारत ( for तथैव च ). — $^{c}$ ) K6. 7 V1 Bo. 6-8 Da3 Dn1. n4 Ds D2-4. 6. 8. 9 M7 स; Da4 M5. 6 न; D7 G1-3. 6 तु ( for च ). — $^{d}$ ) D7 T1 G1-3. 6 transp. न and भुङ्क्ते. K6. 7 B6-9 D4. 7. 9 T G1-3. 6 M1. 5-7 कदाचन ( for कथंचन ). Bo. 8 ( marg. ) Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 न भुंक्तेंतरा पुनः.

10 $^{a}$ ) Da4 भार्या. T2 गच्छेद् ( for गच्छन् ). — $^{b}$ ) Ś1 K1. 2. 4. 7 V1 Bo D4. 9 सदा ( for ऋतौ ). K6. 7 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2-6. 8. 9 Cs वै ( K6. 7 D4. 9 च; D5 स; Cs वा ) द्विजः ( for ब्राह्मणः ). — $^{c}$ ) K1 ऋतवाची ( for °वादी ). K6. 7 B6. 8. 9 Da4 D4. 5. 7. 9 T1 G2. 3. 6 च ( B6. 8. 9 D5. 7 T1 G2. 3. 6 स ) भवति; B7 Da3 Dn1. n4 Ds D2. 3. 6. 8 G1 भवेन्नित्यं ( G1 °न्मौनी ); T2 M1 सदा भवति ( hypermetric ); M7 सदा भाति ( for सदा च स्याज् ). — $^{d}$ ) Dn4 दाननित्यश्च; T1 G2. 3. 6 M5 ( *inf. lin.* as in text ). 6 मौन°; G1 नित्ययुक्तश्च ( for ज्ञाननित्यश्च ). ❀ Ca : ऋतवादित्वस्यामांसाशित्वं अनृतवदने या परहिंसा तत्परिहाराय लाक्षणिकम् । ❀

11 $^{a}$ ) V1 Bo. 7 Dn1. n4 Ds1 D2. 3. 6. 8 न भक्षयेद्; B6. 8. 9 Da3. a4 D4. 9 न भक्षयन्; Ds2 न भवेच्च ( for अभक्षयन् ). K6 तथा ( for वृथा- ). ❀ Cn : वृथा देवपितृशेषं विना ॥ Cs : वृथामांसमयज्ञशिष्टम् । ❀ — $^{b}$ ) K6 Da4 अमांसासी ( Da4 °दि ); T G1-3. 6 अमृताशी ( for अमांसाशी ). V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 भवत्यपि; D7 T1 G1-3. 6 भवेत्तदा ( for भवत्युत ). — $^{c}$ ) G2 दाननित्य- ( for °नित्यः ). K7 Da4 D4. 7. 9 T G1-3. 6 M1. 5-7 पवित्री; B9 D5 °त्रं ( for °त्रश्च ). D7 T G1-3. 6 M1. 5-7 स्याद् ( for च ),

दाननित्यः पवित्रश्च अस्वप्नश्च दिवास्वपन् ॥ ११
भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु सदा स ह ।
अमृतं सकलं भुङ्क्त इति विद्धि युधिष्ठिर ॥ १२
अभुक्तवत्सु नाश्नानः सततं यस्तु वै द्विजः ।
अभोजनेन तेनास्य जितः स्वर्गो भवत्युत ॥ १३
देवताभ्यः पितृभ्यश्च भृत्येभ्योऽतिथिभिः सह ।
अवशिष्टं तु योऽश्नाति तमाहुर्विघसाशिनम् ॥ १४
तेषां लोका ह्यपर्यन्ताः सदने ब्रह्मणा सह ।
उपस्थिताश्चाप्सरोभिः परियान्ति दिवौकसः ॥ १५
देवताभिश्च ये सार्धं पितृभिश्चोपभुञ्जते ।
रमन्ते पुत्रपौत्रैश्च तेषां गतिरनुत्तमा ॥ १६

C. 12. 8020
B. 12. 221. 17
K. 12. 228. 17

इति श्रीमहाभारते शान्तिपर्वणि चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥

---

Da$_{4}$ corrupt. — $^{d}$) Ś$_{1}$ K$_{1.2.4}$ तथास्वप्नो (for अस्वप्नश्च). K$_{6}$ D$_{6.7}$ T$_{1}$ [अ]दिवा (for दिवा). G$_{1}$ अस्वप्नो दिवि वास्वपन्.

12 $^{a}$) D$_{7}$ T G$_{1.3.6}$ भृत्यादिषु च यो भुंक्ते. — After 12$^{a}$, T$_{1}$ ins. 632*, om. 12$^{b}$–13$^{b}$. — $^{b}$) Ś$_{1}$ K$_{1.2.4}$ B$_{0}$ Dn$_{1}$.n$_{4}$ Ds D$_{2.3.6.8}$ सदा सदा; K$_{6}$ सदा मम; K$_{7}$ समाहितः; V$_{1}$ B$_{9}$ D$_{7}$ T$_{2}$ G$_{1-3.6}$ M$_{1.5-7}$ सदा नरः; B$_{6-8}$ Da$_{3}$.a$_{4}$ D$_{5}$ सदाशनं (for सदा स ह). — $^{c}$) K$_{4.7}$ V$_{1}$ B$_{0.6-9}$ Da$_{3}$.a$_{4}$ Dn$_{1}$.n$_{4}$ Ds D$_{2-9}$ T$_{2}$ G$_{1-3.6}$ केवलं; K$_{6}$ M$_{1.5-7}$ स केवलं (hypermetric) (for सकलं). — $^{d}$) K$_{4}$ Da$_{4}$ युधिष्ठिरः.

13 T$_{1}$ om. 13$^{ab}$ (cf. v. l. 12). — $^{a}$) K$_{6.7}$ Dn$_{4}$ D$_{4.5.9}$ नाश्नीयात्; D$_{7}$ T$_{2}$ G$_{1-3.6}$ M$_{1.5-7}$ भुंजानो (G$_{1}$ °ने) (for नाश्नानः). D$_{6}$ भुक्तवत्सु च नाश्नीयात्. — $^{b}$) K$_{6}$ संभवेत्तस्य वै द्विजः; D$_{4.9}$ संभवेन्नस्य वै द्विज; D$_{7}$ T$_{2}$ G$_{1-3.6}$ M$_{1.5-7}$ विषमश्नाति वै द्विजः. — D$_{7}$ T$_{2}$ G$_{1-3.6}$ M$_{5.6}$ Kumbh. ed. ins. after 13$^{ab}$: T$_{1}$ after 12$^{a}$:

632* अदत्त्वा योऽतिथिभ्योऽन्नं न भुङ्क्ते सोऽतिथिप्रियः ।
अदत्त्वान्नं दैवतेभ्यो यो न भुङ्क्ते स दैवतम् ।

[(L. 1) T$_{1}$ om. the prior half. —(L. 2) T$_{2}$ M$_{5.6}$. Kumbh ed. अदत्त्वा दैवतेभ्यश्च (for the prior half).]

14 $^{a}$) Ś$_{1}$ K$_{1.2.4}$ [ऽ]तिथिभ्यश्च (for पितृ°). Ds$_{1}$ देवताभिः पितृभिश्च. — $^{b}$) K$_{1}$ भूतेभ्यो; B$_{6.8}$ (both marg. as in text) Da$_{3}$ T$_{2}$ G$_{1.2}$ भूतेभ्यो; Dn$_{4}$ नृतेभ्यो (for भृत्येभ्यो). T$_{1}$ तथा (for सह). — $^{c}$) B$_{8}$ अवशिष्टस्. V$_{1}$ M$_{6}$ च; G$_{2}$ हि (for तु). — $^{d}$) Ds$_{1}$ D$_{6}$ विघसासि(D$_{6}$ °शासि)नं; T$_{2}$ °शिनः; M$_{7}$ °शनं.

15 K$_{6}$ om. 15–16. M$_{5.6}$ transp. 15 and 16. — $^{a}$) Ś$_{1}$ K$_{1.2.4}$ Ca नां(K$_{2.4}$ अं)तवंतः (for ह्यपर्यन्ताः). ❀ Ca: नान्तवन्तः। अत्र मतुप्प्रत्ययोऽतिशयेन। ❀ — $^{b}$) D$_{7}$ T$_{1}$ G$_{1-3.6}$ स्यंदंते (for सदने). Da$_{4}$ ब्रह्मणाः. K$_{7}$ D$_{4.9}$ सदने ब्रह्मणः सदा. — $^{c}$) D$_{7}$ T$_{1}$ उपस्थितश्च्. D$_{5}$ transp. च and अप्सरोभिः. — $^{d}$) Da$_{4}$ परिपात (sic); D$_{7}$ T$_{1}$ परियाति.

16 K$_{6}$ om. 16 (cf. v. l. 15). M$_{5.6}$ transp. 15 and 16. — $^{a}$) D$_{7}$ T$_{1}$ G$_{1-3.6}$ ते (for ये). — $^{b}$) B$_{9}$ पितृभ्यश्च् (for °भिश्च्). D$_{4}$ चाप-; T$_{2}$ चापि; G$_{1}$ योप-; M$_{1.5.6}$ चैव (for चोप-). — $^{d}$) K$_{1}$ D$_{4}$ अनुत्तमं (D$_{4}$ °माः).

Colophon. — *Sub-parvan:* Ś$_{1}$ K$_{1.2.4.6.7}$ V$_{1}$ B$_{0.6-9}$ Da$_{3}$.a$_{4}$ Dn$_{1}$.n$_{4}$ Ds D$_{2-4.6-9}$ T G$_{1-3.6}$ M$_{1.5-7}$ मोक्षधर्म. — *Adhy. name:* Ś$_{1}$ K$_{1.2.4}$ अमृतप्राशनिकं; K$_{6}$ °प्रकाशिकः; K$_{7}$ D$_{4.5.9}$ M$_{7}$ °प्राशिकः; V$_{1}$ B$_{0.6-9}$ Da$_{3}$.a$_{4}$ Dn$_{1}$ Ds$_{1}$ D$_{2.3.6.8}$ °प्राश्निकः; M$_{1}$ °प्रकाशकः; M$_{5}$ तपोलक्षणं. — *Adhy. no.* (figures, words or both): B$_{7}$ 47: Dn$_{1}$ D$_{7}$ T$_{1}$ G$_{1.3.6}$ M$_{5}$ 48; D$_{8}$ 45; T$_{2}$ G$_{2}$ 62; M$_{1.6.7}$ 46. — *Śloka no.:* Dn$_{1}$.n$_{4}$ Ds$_{1}$ D$_{8}$ 17. — After 12. 214, Kumbh. ed. Cv ins. a passage given in Appendix I, (No. 20).

# २१५

C. 12. 8021
B. 12. 222. 1
K. 12. 229. 1

युधिष्ठिर उवाच ।
यदिदं कर्म लोकेऽस्मिञ्शुभं वा यदि वाशुभम् ।
पुरुषं योजयत्येव फलयोगेन भारत ॥ १
कर्ता स्वित्तस्य पुरुष उताहो नेति संशयः ।
एतदिच्छामि तत्त्वेन त्वत्तः श्रोतुं पितामह ॥ २
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादस्य च संवादमिन्द्रस्य च युधिष्ठिर ॥ ३
असक्तं धूतपाप्मानं कुले जातं बहुश्रुतम् ।
अस्तम्भमनहंकारं सत्त्वस्थं समये रतम् ॥ ४
तुल्यनिन्दास्तुतिं दान्तं शून्यागारनिवेशनम् ।
चराचराणां भूतानां विदितप्रभवाप्ययम् ॥ ५
अक्रुध्यन्तमहृष्यन्तमप्रियेषु प्रियेषु च ।
काञ्चने वाथ लोष्टे वा उभयोः समदर्शनम् ॥ ६
आत्मनिःश्रेयसज्ञाने धीरं निश्चितनिश्चयम् ।
परावरज्ञं भूतानां सर्वज्ञं समदर्शनम् ॥ ७
शक्रः प्रह्लादमासीनमेकान्ते संयतेन्द्रियम् ।
बुभुत्समानस्तत्प्रज्ञामभिगम्येदमब्रवीत् ॥ ८

---

## 215

1 $^{c}$) $B_9$ पुरुषो ( for °षं ). $D_{a4}$ एवं ( for एव ). — $^{d}$) $G_2$ फलं ( for फल- ). $D_6$ -भोगेन ( for -योगेन ).

2 $^{a}$) $K_4$ [अ]सि ; $K_6$ $V_1$ $B_{0,6-9}$ $D_{n1,n4}$ $D_8$ $D_{2,3,5-8}$ $G_1$ [अ]स्ति ; $K_7$ $D_{4,9}$ श्चित् ; $D_{a3,a4}$ [अ]स्मि ; $M_{1,7}$ किं ( for स्वित् ). $K_4$ तुल्य- ( for तस्य ). — $^{b}$) $K_{1,4}$ तता( $K_4$ °तो )हो ( for उताहो ). — $^{d}$) $D_7$ T $G_{1-3,6}$ $M_{1,5-7}$ transp. त्वत्तः and श्रोतुं. $D_7$ T $G_{1-3,6}$ $M_{5-7}$ वदस्व मे ( for पितामह ).

3 $^{c}$) $Ś_1$ $K_{1,2,4,7}$ $B_7$ $D_{s2}$ $D_{5-8}$ T $G_{2,3,6}$ $M_{1,5-7}$ प्रह्लादस्य. — $^{d}$) $D_{a4}$ युधिष्ठिरः.

4 $^{a}$) $K_7$ $D_7$ असक्त- ; $D_{s1}$ अनासक्तं (hypermetric). $Ś_1$ $K_{1,2,4}$ $D_{4,9}$ धुत- ; $D_6$ पूत- ( for धूत- ). $K_1$ -पाप्मानां ( for -पाप्मानं ). — $^{b}$) $D_{n1}$ कुल- ( for कुले ). $D_4$ मनस्विनं ( for बहुश्रुतम् ). — $^{c}$) $K_{4,7}$ $V_1$ $B_{0,6-9}$ $D_{a3,a4}$ $D_{n1,n4}$ $D_{2-6,8,9}$ $M_1$ अस्तब्धम् ( for °म्भम् ). — $^{d}$) $T_2$ $G_{1,6}$ $M_{1,5-7}$ संयमे रतं ; Cp समये नतं ( gloss : अकालाकाङ्क्षिणं ) ( for समये रतम् ).

5 $Ś_1$ $K_2$ repeat $5^{ab}$ after 6. — $^{b}$) $K_1$ $T_1$ शून्यागारे ; $D_7$ °कार- ; $G_1$ शूराकारं ; $G_2$ शून्याकारं ( for °गार- ). $K_{6,7}$ $D_{4,5,9}$ -समाश्रयं ; $D_8$ $D_7$ T $G_{1-3,6}$ $M_{1,5-7}$ Cpp. Cs -समाकृतिं ( for -निवेशनम् ). $Ś_1$ $K_2$ ( both second time ) तथा शीतोष्णयोः समं. ❀ Cp : अहंताममताकर्तृत्वभोक्तृत्वादिशून्यमागारं गृहं शरीरं तत्र निवेशनं प्रवेशो यस्य तम् । ❀ — $G_{1,2}$ om. $5^{c}-7^{c}$. — $^{c}$) $D_5$ चराचरज्ञं ( for °चराणां ). — $^{d}$) $K_{4,6,7}$ $B_{0,6,7,9}$ $D_{a3,a4}$ $D_{n4}$ $D_8$ $D_{2,3,8}$ $T_2$ $M_{1,5-7}$ -प्रभवाव्ययं ( for °प्ययम् ). ❀ Cn : विदितप्रभवाप्ययम् । विदितः प्रभवश्चासौ अप्ययश्चेत्यपरिणाम्युपादानभूतः परमात्मा येन तम् । ❀

6 $G_{1,2}$ om. 6 ( cf. v. l. 5 ). — $^{a}$) $K_4$ $D_{a4}$ अक्रु- ( $D_{a4}$ °नु )ध्यंतम् ( for अहृ° ). — $^{c}$) $D_{a4}$ [अ]पि ( for [अ]थ ). $D_{a4}$ [अ]लोष्टे वा ; $D_7$ T $G_{3,6}$ वा लोष्टे ( by transp. ). — $^{d}$) $Ś_1$ $K_{1,2}$ चोभयोः ; $K_7$ $D_{4,9}$ [अ]प्यु° ( for उ° ). $D_{a3,a4}$ $D_7$ $T_1$ $G_{3,6}$ -दर्शिनं ( for -दर्शनम् ). — After 6, $Ś_1$ $K_2$ repeat $5^{ab}$.

7 $G_{1,2}$ om. $7^{abc}$ ( cf. v. l. 5 ). $V_1$ reads 7 on marg. — $^{a}$) $B_6$ $D_{a3,a4}$ $D_8$ -निःश्रेयसं ( $D_8$ °सि ) ( for °यस- ). $K_{1,4}$ $D_{n1,n4}$ $D_{s2}$ $D_{2,3,5,6}$ $T_1$ $G_{3,6}$ $M_{1,7}$ Cn आत्मनि श्रेयसं ( $D_{n1,n4}$ $D_{s2}$ $D_{2,3}$ Cn °सि ) ज्ञाने ; $K_{6,7}$ $B_0$ $D_{s1}$ $D_7$ $T_2$ $M_{5,6}$ °नि श्रेयसज्ञाने. — $^{b}$) $B_{7,8}$ ( marg. ), $_9$ -दर्शनं ( for -निश्चयम् ). — $^{d}$) $D_{a3}$ सर्वत्र ( for सर्वज्ञं ). $K_6$ $B_{6-9}$ $D_{a3,a4}$ $D_8$ $T_1$ $G_{3,6}$ सर्व- ( for सम- ). $B_{6,7,9}$ $D_{a3,a4}$ $D_{4,5,7,9}$ T $G_{2,3,6}$ $M_{1,5-7}$ -दर्शिनं ( for -दर्शनम् ). — After 7, Kumbh. ed. ins. :

633* अव्यक्तात्मनि गोविन्दे वासुदेवे महात्मनि ।
हृदयेन समाविष्टं सर्वभावप्रियंकरम् ।

Kumbh. ed. cont. : $D_7$ T $G_{1-3,6}$ $M_{1,5-7}$ ins. after 7 :

634* भक्तं भागवतं नित्यं नारायणपरायणम् ।
ध्यायन्तं परमात्मानं हिरण्यकशिपोः सुतम् ।

8 $^{a}$) $D_6$ शुक्रः ; $G_1$ शुक्र- ( for शक्रः ). Some

यैः कैश्चित्संमतो लोके गुणैः स्यात्पुरुषो नृषु ।
भवत्यनपगान्सर्वांस्तान्गुणाँल्लक्षयामहे ॥ ९
अथ ते लक्ष्यते बुद्धिः समा बालजनैरिह ।
आत्मानं मन्यमानः सञ्श्रेयः किमिह मन्यसे ॥ १०
बद्धः पाशैश्च्युतः स्थानाद्द्विषतां वशमागतः ।
श्रिया विहीनः प्रह्राद शोचितव्ये न शोचसि ॥ ११
प्रज्ञालाभात्तु दैतेय उताहो धृतिमत्तया ।
प्रह्राद स्वस्थरूपोऽसि पश्यन्व्यसनमात्मनः ॥ १२
इति संचोदितस्तेन धीरो निश्चितनिश्चयः ।
उवाच श्लक्ष्णया वाचा स्वां प्रज्ञामनुवर्णयन् ॥ १३
प्रवृत्तिं च निवृत्तिं च भूतानां यो न बुध्यते ।
तस्य स्तम्भो भवेद्बाल्यान्नास्ति स्तम्भोऽनुपश्यतः ॥ १४
स्वभावात्संप्रवर्तन्ते निवर्तन्ते तथैव च ।
सर्वे भावास्तथाभावाः पुरुषार्थो न विद्यते ॥ १५
पुरुषार्थस्य चाभावे नास्ति कश्चित्स्वकारकः ।
स्वयं तु कुर्वतस्तस्य जातु मानो भवेदिह ॥ १६

C. 12. 8036
B. 11. 222. 16
K. 12. 229. 21

MSS. प्रह्लादम्. M5. 6 प्रह्लादमिंद्रस्त्वासीनम्. — c) T1 (*inf. lin.* as in text) अबुत्समानस् (for बुभु°). M1 तं (for तत्-). K7 M1 प्राज्ञम् (for -प्रज्ञाम्).

9 Before 9, Da3. a4 T2 ins. इन्द्रः; T1 G2. 3. 6 शक्रः; G1 शुक्रः. — a) K6. 7 V1 B0. 6. 7. 8 (marg. as in text). 9 Da3. a4 Dn1 Ds2 D2-6. 8 T G1 M1. 5. 6 कश्चित् (for कै°). K2 D4. 9 G3 स मतो; D6 सर्वतो; D7 संगतो (for संमतो). G1. 2 लोको (for लोके). — c) Ś1 K1. 2 सदैव (for भवति). V1 अनयगान् (for अनप°). Da3. a4 भग(Da3 om. ग)वत्यनपान्सर्वांस्. ❀ Cn. p: भवति त्वयि अनपगान् स्थिरान् । ❀ — d) Da4 G1 om. तान्. D7 T1 G3 गुणाँल्लक्षणयामहे.

10 a) K7 V1 Da4 लक्षते. — b) Ś1 बालजजैर्; K1. 2. 4 T2 °जडैः; T1 G3. 6 °जलैर्; G2 M5. 6 °जलैर् (for °जनैर्). K3. 4 B8 (marg. as in text) सह (for इह). M1. 7 समा बाला (M7 °ल-) जने(M7 °ले)ष्विव. — c) D4 आत्मानो; G1 आत्मनं (sic). Dn4 प्रत्यमानः (for मन्य°). K7 D4. 9 स (for सन्). Ca आत्मानं मन्यमानस्य (gloss: आत्मज्ञस्य). — d) K6 D8 D7 T G1-3. 6 M1. 5-7 ज्ञेयं; Da4 श्रेयं (for श्रेयः). Da3 कम् (for किम्).

11 a) Da4 वात-; T2 च्युतैः; M7 च्युत- (for च्युतः). — c) Da4 Ds1 M7 विहीन; D4 विहीतः; D6 हीनोति; D7 विहीनाः; G3 °नं (for °नः). Some MSS. प्रह्लाद; K1. 4 M7 प्रह्लादः; B9 प्रह्लादः — d) K3 D7 G1 शोचितव्यो (for °तव्ये).

12 a) Ds2 (marg.) G3. 6 M7 नु (for तु). K1. 2. 7 D4. 9 दैत्येय; D5 दैत्येंद्र (for दैतेय). — b) Da4 उत्तमा (for उताहो). D7 धृतिमत्तथा. — c) Some MSS. प्रह्लाद; K7 प्रह्लादः; D7 प्रह्लादः. Da3 Dn1. n4 D2. 3. 6. 8 सुस्थ-; T1 G3 स्वस्थ-; G1 सस्थु- (for स्वस्थ-). T1 हि (for ऽसि). — d) Ś1 K1. 2 V1 B0 G1. 2 पश्य (for पश्यन्).

13 Before 13, Kumbh. ed. ins. भीष्म उवाच. — a) D4 संचोदितस् (for संचो°). — b) T1 वीरो (for धीरो). V1 -मानसः (for -निश्चयः). — d) D6 स्व- (for स्वां). K7 V1 B0. 9 Da3. a4 D4. 5. 9 -वर्तयन् (for -वर्णयन्).

14 Before 14, some MSS. ins. प्रह्लाद (v. l. प्रह्लाद) उवाच. — b) D5 नु (for न). Ś1 K1. 2 बुध्यति. — $14^{cd} = 26^{cd}$. $14^{cd}$ is partly damaged in B7. — c) K1 ततः (for तस्य). ❀ Ca: स्तम्भः कर्तव्यतामोहः । ❀ — d) G1 न (for ऽनु-). K7 -पश्यत; B8 -पश्यति. — After 14, Kumbh. ed. ins.:

635* गहनं सर्वभूतानां ध्येयं नित्यं सनातनम् ।
अनिग्रहमनौपम्यं सर्वाकारं परात्परम् ।
सर्वावरणसंभूतं तस्मादेतत्प्रवर्तते ।
तन्मया अपि संपश्य नानालक्षणलक्षिताः ।
स वै पाति जगत्स्रष्टा विष्णुरित्यभिशब्दितः । [5]
पुनर्दर्शेति संप्राप्ते ......... सुरेश्वरः (sic) ।

15 a) K1 संप्रवर्तंते. — G1 repeats $15^{bc}$ after $17^{abc}$. — b) V1 नराधिप (for तथैव च). — c) Da4 सर्वो (for सर्वे). D5 तथालाभाः (for °भावाः). — d) B1. 3 (marg.). 9 Cp दृश्यते (for विद्यते).

16 a) Da3 या भावे; D4 वाभावि; D5 धाभावो; D7 T1 G3 वाभावे (for चा°). — b) D7 T1 G1-3. 6 काचित् (for कश्चित्). Da3 स कारकः; Dn1. n4 D2. 3. 8 च कारकः; D6 सुकर्मकः; D7 T G1-3. 6 स्वका रतिः (T2 °तः) (for स्वकारकः). — c) K3 स्वीयं (for स्वयं). K6 B0. 6-9 Da3. a4 Dn1. n4 D8 D2. 3. 5-8 न (for तु). V1 T1 G3. 6 [अ]कुर्वतस् (for °तस्). B9.

C. 12. 8037
B. 12.222. 17
K. 12. 229. 22

यस्तु कर्तारमात्मानं मन्यते साध्वसाधुनोः ।
तस्य दोषवती प्रज्ञा स्वमूर्त्यज्ञेति मे मतिः ॥ १७
यदि स्यात्पुरुषः कर्ता शक्रात्मश्रेयसे ध्रुवम् ।
आरम्भास्तस्य सिध्येरन्न च जातु पराभवेत् ॥ १८
अनिष्टस्य हि निर्वृत्तिरनिवृत्तिः प्रियस्य च ।
लक्ष्यते यतमानानां पुरुषार्थस्ततः कुतः ॥ १९
अनिष्टस्याभिनिर्वृत्तिमिष्टसंवृत्तिमेव च ।
अप्रयत्नेन पश्यामः केषांचित्तत्स्वभावतः ॥ २०
प्रतिरूपधराः केचिद्दृश्यन्ते बुद्धिसत्तमाः ।
विरूपेभ्योऽल्पबुद्धिभ्यो लिप्समाना धनागमम् ॥ २१
स्वभावप्रेरिताः सर्वे निविशन्ते गुणा यदा ।
शुभाशुभास्तदा तत्र तस्य किं मानकारणम् ॥ २२
स्वभावादेव तत्सर्वमिति मे निश्चिता मतिः ।
आत्मप्रतिष्ठिता प्रज्ञा मम नास्ति ततोऽन्यथा ॥ २३

---

7. 9 Da3. a4 कस्य ( for तस्य ). K1 स्वयं भुक्तवतस्तस्य. — d ) T1 इति ( for इह ).

17 a ) Dn4 यस्य ( for यस्तु ). — b ) K6 V1 Bo. 7 Dn1. n4 Ds D2. 3. 5–8 T1 G1–3. 6 साध्वसाधु वा ; B6. 8. 9 Da3. a4 °साधुनि ( B6. 9 °नी ) ( for °साधुनोः ). — 17cd is damaged in B7. After 17abc, G1 repeats 15bc. — d ) K4. 6 V1 Bo. 6. 8. 9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 T2 M1. 5–7 Cap. Cp अ( B9 Da3. a4 D5 T2 Cp न )तत्त्वज्ञा ; D7 T1 G1–3. 6 न तु प्रज्ञा ; Cpp स्वमूर्त्यज्ञा ( as in text ). ❀ Ca : स्वमूर्त्यज्ञेति स्वामेव मूर्तिं शरीरं स्वयंकृतमजानती मूढा । ❀

18 b ) B6 ( marg. ) शक्र स्व- ; Da4 शक्राल्प- ; Ds1 शक्तात्मा ; Ds2 ( before corr. ) शक्त्यात्म- ; G1. 2 शक्रान्मे ( G2 °न्ये ) ( for शक्रात्म- ). K7 D4. 5. 9 T2 -श्रेयसि ; M1. 5. 6 -श्रेयसो ( for °से ). — c ) K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 सिध्ये( K6. 7 Ds1 D6 °द्धे )युर् ; T1 विध्येरन् ; M1. 7 सिध्यंते ( for सिध्येरन् ). — d ) K6. 7 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 G3. 6 तु ( for च ).

19 a ) K6 Ds M5. 6 अप्रियस्य ; Bo D7 T1 G1. 2 अरिष्टस्य ; D9 अनिपृस्य ( sic ) ( for °ष्टस्य ). Ś1 K1. 2. 4 T2 च ; K7 Ca [अ]पि ; D4. 9 M5. 6 [अ]भि- ; D7 T1 G1. 2 न ( for हि ). K6 Dn1 D4 निवृत्तिर्. — D5 om. ( hapl. ) 19b–20a ; V1 reads it on marg. ❀ Ca : निर्वृत्तिः असिद्धिः । ❀ — b ) Ś1 K1. 2 अप्रवृत्तिः ; V1 B9 Da4 Ds D7. 9 T2 G1 M1. 7 अनिर्वृत्तिः. K6 वा ( for च ). K7 प्रियस्याप्राप्तिरेव च. ❀ Ca : अनिवृत्तिः सिद्धिः । ❀ — c ) K1 B8 लक्षते. — d ) Da4 पुरुषार्थं. B6. 8 ( both marg. as in text ). 9 Da3. a4 फलं ( for ततः ). D2 om. कुतः.

20 D5 om. 20a ( cf. v. l. 19 ). V1 reads 20a on marg. — a ) Da4 हि ; Ds1 lacuna ( for [अ]भि- ). K6 Dn1 -निवृत्तिर् ( Dn1 °म् ) ; Ds -निर्वृत्तिर्. D7 T G1–3. 6 M1. 5. 6 अनिष्टस्याप्यनिर्वृत्ति( G2 °वृत्ति- ; M1 °र्दिष्ट )म्. — b ) K6 B6 Ds -संवृत्तिर् ; D7 T G3. 6 M5. 6 -निर्वृत्तिम् ; G1. 2 -निवृत्तिम् ( for -संवृत्तिम् ). — c ) Ś1 K1. 2 अप्रवृत्तेन ; B9 अथ यत्नेन ; G1 अप्रयत्ने च ( for °त्नेन ). D7 T G1–3. 6 M1. 5–7 पश्यामि ( for °मः ). — d ) Dn4 केषां वै ( for केषांचित् ). Ś1 K2 तु ; D5 वै ; D7 T1 न ( for तत् ).

21 a ) K6 अति- ; B6–9 अभि- ( for प्रति- ). K1 -रूपवतः ; K6 V1 Bo. 7 Da3. a4 Dn1. n4 Ds D2. 3. 6–8 M1. 5–7 Ca. s -रूपतराः ; K7 B6. 8. 9 D4. 5. 9 °तमाः ( for °धराः ). — b ) K1 D5. 7 T G1–3. 6 M5. 6 -मत्तमाः ; K6 V1 Bo. 6 Da3 Dn1. n4 Ds D2. 3. 6. 8 -मत्तराः ; M7 -संमताः ( for -सत्तमाः ). — c ) B6 निरूपेभ्यो ( for विरू° ).

22 a ) Bo स्वभावात् ( for स्वभाव- ). Ś1 K2. 4 -प्रसृताः ( for -प्रेरिताः ). — b ) K7 D9 निर्विशंते ; V1 B6 D5 निवसंते ; Dn1 न विशंते ; Cp विविशंते ( for निवि° ). D6 यदा यदा ; D7 T G2. 3. 6 यथा गुणान् ( T2 °णाः ) ; G1 यदा गुणाः ( by transp. ). ❀ Cn : गुणाः सुखदुःखादयः । ❀ — c ) Ś1 K1. 2 शुभाशुभस् ; D7 T1 G2 °शुभं ; G3. 6 °शुभांस् ( for °शुभास् ). B9 Da3. a4 तात ( for तत्र ). — d ) K4. 6. 7 V1 Bo. 6–9 Dn1. n4 Ds D2–6. 8. 9 कस्य किं ; Da3. a4 कस्यचिन् ( for तस्य किं ). Ś1 K2 मम ; K1 सम- ; V1 B6 ( marg. as in text ) D5. 7 T1 G2. 3. 6 नाम ; T2 G1 काम- ( for मान- ).

23 a ) D7 T G1–3. 6 M5. 6 ते सर्वं ( for तत्सर्वम् ). — b ) D6 इति मे निश्चयाम्मतिः ( sic ). — c ) V1 Bo. 6–9 Da3. a4 Dn1. n4 D2. 3. 6. 8 आत्मप्रतिष्ठा प्रज्ञा वा ; D7 T1 G2. 3. 6 °प्रतिष्ठा वि( G3 °ष्ठप्र- ; G6 °ष्ठा प्र )ज्ञानात्. — d ) D7 T1 G2. 3. 6 परं ( for मम ).

24 a ) Ś1 K1. 2. 4. 7 D4. 9 स्वभि- ( for त्विह ). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 मन्यं-

कर्मजं त्विह मन्येऽहं फलयोगं शुभाशुभम् ।
कर्मणां विषयं कृत्स्नमहं वक्ष्यामि तच्छृणु ॥ २४
यथा वेदयते कश्चिदोदनं वायसो वदन् ।
एवं सर्वाणि कर्माणि स्वभावस्यैव लक्षणम् ॥ २५
विकारानेव यो वेद न वेद प्रकृतिं पराम् ।
तस्य स्तम्भो भवेद्बाल्यान्नास्ति स्तम्भोऽनुपश्यतः ॥ २६
स्वभावभाविनो भावान्सर्वानेवेह निश्चये ।
बुध्यमानस्य दर्पो वा मानो वा किं करिष्यति ॥ २७

वेद धर्मविधिं कृत्स्नं भूतानां चाप्यनित्यताम् ।
तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत् ॥ २८
निर्ममो निरहंकारो निरीहो मुक्तबन्धनः ।
स्वस्थोऽव्यपेतः पश्यामि भूतानां प्रभवाप्ययौ ॥ २९
कृतप्रज्ञस्य दान्तस्य वितृष्णस्य निराशिषः ।
नायासो विद्यते शक्र पश्यतो लोकविद्यया ॥ ३०
प्रकृतौ च विकारे च न मे प्रीतिर्न च द्विषे ।
द्वेष्टारं न च पश्यामि यो ममाद्य ममायते ॥ ३१

C. 12. 8031
B. 12. 222. 31
K. 12. 229. 36

---

( Da4 °न्य )ते ( for मन्येऽहं ). —b) K7 B6–9 Da3, a4 D4. 5. 9 पृथग्विधं ; D7 T1 G2 शुभावहं ( for °शुभम् ). —c) D5 कर्मणा. Ś1 K1. 2 सर्वम् ; D2 कृष्णम् ( for कृत्स्नम् ). —d) Ś1 K1. 2 ते ( for तत् ).

25 a) B7 यदा ; D7 T1 G2 तथा ( for यथा ). T1 किंचिद् ( for कश्चिद् ). G1. 3. 6 यतः प्रमोदते कश्चिद्. ❀ Ca : वेदयते, ओदनं भक्तं लभ्यमधुनेति सूचयति, न तु स एवोदनदाने कर्ता ॥ Cs : वेदयते जिह्वादंशादिना वेदनां प्राप्नोति । ❀ —b) Ds1 D7 T G1–3. 6 M7 पायसं ; M6 वायसं ( for °सो ). Ś1 K1. 2. 4 नवं ; K6 V1 Dn1. n4 Ds D2. 3. 5. 7 T G1–3. 6 M7 Cs. v ह्यदन् ; K7 D4. 9 ह्यटन् ; M3 ह्यसन् ( for वदन् ). —c) D5 कर्माणि सर्वाणि ( by transp. ). K6 Ds1 भूतानि ( for कर्माणि ). —d) K7 D4. 9 एष ( for एव ). ❀ Ca : लक्षणम् अनुमापकम् । ❀

26 K1 om. 26. —a) K4 विकारादेव ; Dn1 G2. 3. 6 °न्नैव ; D5 °वेव ; D7 °रांते च ( for °रानेव ). —b) Da4 प्रकृति- ( for °तिं ). D4. 5 परा ( for पराम् ). — 26cd = 14cd. —d) K4 स्तंभौ.

27 a) D7 T G1–3. 6 M1. 5–7 -भावितान् ( for -भाविनो ). —b) D7 G2 एवाह ( for एवेह ). K6 B6. 6–9 Dn1. n4 D2. 6. 8 निश्चयात् ; K7 D4. 9 °यं ; Da3. a4 D5. 7 T1 °यः ; Ds D3 °यान् ( for °ये ). —c) K7 बुध्यमानः स्व- ; Da4 युध्यमानस्य ; D5 बुध्यमानश्च ( for °मानस्य ). D6 गर्वो वा ; D7 T G1–3. 6 M1 7 वा दर्पो ( by transp. ). —d) K4 मान्ये वा ; K7 D4. 9 हर्षो वा ; Da1 वा मानो ( by transp. ) ; D5 वा मानी.

28 a) D5. 7 T1 G2. 3. 6 कर्म- ( for धर्म- ). G2 कुर्वन् ( for कृत्स्नं ). —b) K6 वा ( for च ). Da4 भूतानां चास्य नित्यशं ( sic ). —d) Da4 सर्वे ( for सर्वं ). Ś1 K1. 2 एव ; B6 ( marg. as in text ). 7–9 M5 चैव ( for ह्येव ). D5 सर्वं ह्येवेदमंत्रवित् ( sic ).

29 Da3 om. 29a. —a) D4 निरहंकारा. —b) K6. 7 V1 B0. 6. 7. 8 ( marg. as in text ). 9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 निराशीर् ; T1 निरीहा ( for °हो ). —c) B3 स्वच्छो ; Da3. a4 व्यस्थो ; G2 स्वस्तो ( for स्वस्थो ). K6 B0 Ds D3. 5 T1 [ऽ]प्यपेतः ; G1 [ऽ]प्यवेदः ( for ऽव्यपेतः ). ❀ Cn : स्वस्थः, अव्यपेतः देहाद्यनभिमानेन स्वरूपादप्रच्युतः । ❀ —d) D4 om. from प्रभवा up to विद्यया ( in 30d ). K7 B0 प्रभवाव्ययौ.

30 D4 om. 30 ( cf. v. l. 29 ). —a) D5 घृत- ; D6 कृत्स्नं ( for कृत- ). Da4 -प्रज्ञास्य ( for -प्रज्ञस्य ). B8 ( marg. ) शांतस्य ( for दान्तस्य ). —b) K6 B8 ( marg. as in text ) Dn1 Ds1 D5. 6 T G1–3. 6 M1. 5. 6 वितृप्तस्य ; Ds2 D3 °प्यस्य ( for °ष्णस्य ). —c) D7 T1 G2. 3. 6 तस्य ( for शक्र ). —d) G1. 3 योग- ( for लोक- ). G1 -वित्तया ; M7 ( *inf. lin.* as in text ) -निश्चयं ( for -विद्यया ). K7 Dn1. n4 D2. 9 पश्यतो लोकमव्ययं. ❀ Ca : लोकविद्यया, लोकस्वभावाद्यवबोधकं ज्ञानं लोकविद्या । [अ]लोकविद्यया ब्रह्मज्ञानेन सार्वज्ञफलेनेत्यकारप्रश्लेषो वा । ❀

31 a) K6 प्रकृते ( for °तौ ). Ds1 D5 प्रकृते( D5 °तो )व विकारेव ( sic ). ❀ Cn : प्रकृतौ विश्वकर्त्र्याम् ॥ Cs : प्रकृतौ पुरातने, विकृते [°कारे] इदानींतने । ❀ —b) B9 D6 बुद्धिर् ( for प्रीतिर् ). B9 मे ( for च ). B7 द्विषो ; G1 द्विषि. K7 D4. 5. 9 प्रीतिर्द्वेषोपि वा न मे. —c) K6 B0. 7. 9 Da3. a4 Dn1. n4 Ds D3. 5. 6. 8 transp. न and च. B0 शोचामि ( for पश्यामि ). —d) Ś1 K2 ममापि ; K1 समाप्य ; K4. 6 V1 B0. 6. 7. 8 ( marg. as in text ) Dn1. n4 Ds D2. 3. 5. 6. 8 मामद्य ; K7 D4. 9 मामपि ; Da3. a4 ममेत्य ( for ममाद्य ). Ś1 K2 [अ]स- ( K2 °स )मायते ; K7 D4. 9 [अ]वसादयेत् ; B3 न मन्यते ; D5. 7 न जायते ; D8 समायते ; T1 G3. 6 विरु-

C. 12. 8052
B. 12. 222. 32
K. 12. 229. 37

नोर्ध्वं नावाङ् तिर्यक्च न क्वचिच्छक्र कामये ।
न विज्ञाने न विज्ञेये नाज्ञाने शर्म विद्यते ॥ ३२

शक्र उवाच ।

येनैषा लभ्यते प्रज्ञा येन शान्तिरवाप्यते ।
प्रब्रूहि तमुपायं मे सम्यक्प्रह्राद पृच्छते ॥ ३३

प्रह्राद उवाच ।

आर्जवेनाप्रमादेन प्रसादेनात्मवत्तया ।
वृद्धशुश्रूषया शक्र पुरुषो लभते महत् ॥ ३४

स्वभावाल्लभते प्रज्ञां शान्तिमेति स्वभावतः ।
स्वभावादेव तत्सर्वं यत्किंचिदनुपश्यसि ॥ ३५

भीष्म उवाच ।

इत्युक्तो दैत्यपतिना शक्रो विस्मयमागमत् ।
प्रीतिमांश्च तदा राजंस्तद्वाक्यं प्रत्यपूजयत् ॥ ३६
स तदाभ्यर्च्य दैत्येन्द्रं त्रैलोक्यपतिरीश्वरः ।
असुरेन्द्रमुपामन्त्र्य जगाम स्वं निवेशनम् ॥ ३७

इति श्रीमहाभारते शान्तिपर्वणि पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥

---

ध्यति; G1 महाद्युते (for ममायते). T2 यो मे माद्याम-मंधते (sic). ❀ Ca. n. p. s: ममायते ममेवा(Cs ममत्व-मिवा)चरति । ❀

32 a) K1 नोर्वं; Da4 सोर्द्ध; Ds1 नोर्द्धं. K2.4.6 Bo. 6.7.9 Dn1 Ds D2.3.5.6.8 G1 नार्वाङ्; K7 D4.9 नाधो (for नावाङ्). K7 D4.9 G1 ति( K7 ती )र्यग्वा; D7 तिर्यंच; T2 तिर्यश्च (for °क्च). — b) Ś1 K1.2.4 क्वचिच्छक्र न कामये. — c) K6.7 Bo. 6–8 Da3. a4 Dn1. n4 Ds D2–5.7–9 T G2.3.6 M1.5–7 हि ज्ञेये; D6 हि ज्ञाने; G1 हि ज्ञेन (for विज्ञाने). K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G1–3.6 M1.5–7 विज्ञाने ( B6 D5 °नं) (for विज्ञेये). — d) B6.8 Da4 Dn1 Ds1 D2.5.6 न ज्ञाने; Da3 lacuna (for नाज्ञाने). K7 B1 Dn1. n4 D2–5.8.9 Cn (Cnp as in text) कर्म (for शर्म). D1 T G1–3.6 M1.5–7 नाज्ञा( G2 ना जा-; M7 न ज्ञा )ने विद्यतेंतरं. ❀ Cs: नाज्ञाने, आज्ञाने प्रकृतिमहदहंकारभूत-तन्मात्राख्ये । ❀

33 a) B9 Da4 लभते (for लभ्यते). G1 प्राज्ञा. — b) G1 येनैषा शांतिराप्यते. — d) Some MSS. प्रह्लाद. K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2.3.6.8 पृच्छतः (D2 °ताः) (for °ते).

34 Some MSS. प्रह्लाद. B9 reads 34–36 twice. — a) Da4 [अ]प्रसादेन. — b) D4 प्रमादेन (for प्रसा°). V1 [आ]त्मवित्तया. ❀ Cn: प्रसादेन बुद्धेर्नैर्मल्येन । ❀ — c) D7 T1 G3.6 M1.5–7 गुरु- (for वृद्ध-). K7 Da4 -शुश्रुषया. — d) Ś1 K1.2.4 विंदते; B9 (both times) लभ्यते (for लभते). K6 Ds1 लभते पुरुषो महत्.

35 For the repetition in B9, cf. v. l. 34. — a) K2 लभ्यते. G1 प्रज्ञा. — b) G1 येन शांति- (for शान्तिमेति). — d) K6 B7.8 (marg. as in text) Ds1 -पश्यति (for °सि). — After 35, Kumbh. ed. Cv ins. a passage given in App. I, (No. 21).

36 For the repetition in B9, cf. v. l. 34. Ś1 K1.2.4.6.7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–6.8.9 M1.5–7 om. the ref. — a) K1 दैति- (for दैत्य-). — b) K1 आगतं; B8 Da4 D5 आगतः (for °मत्). — c) Ś1 K2 स्म; K1 स (for च). D7 T G1–3.6 M1.5–7 ततो (for तदा). — d) K6 T2 प्रतिपूजयत् ( K6 °न्); Da3. a4 सम° (for प्रत्य°).

37 D4 reads 37$^{ab}$ twice. — a) Da4 G1 दैत्येंद्र; D7 देवेंद्रं. T1 G2.3.6 स तदा सर्वदेवेंद्रस्. — b) D4 (first time) त्रैलोक्यं प्रत्यपूजयत्. — c) Ś1 K1.2.4 सुरें-द्रस्तमुपामंत्र्य. — d) Ś1 K1.4 स्व- (for स्वं).

Colophon. — *Sub-parvan :* Ś1 K1.2.4.6.7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–4.6–9 T G1.2.6 M1.5–7 मोक्षधर्म. — *Adhy. name :* Ś1 K1.2.4 D6.8 शक्र-प्रह्लादसंवादः; K6 V1 Bo. 6.8.9 Da3. a4 Dn1. n4 Ds D2.3 G1.6 M1.5–7 °प्रह्लादसंवादः; K7 D4.5.9 प्रह्लाद-शक्रसंवादः; D7 G2 इंद्रप्रह्लादसंवादः. — *Adhy. no.* (figures, words or both): Dn1 D7 T1 G3.6 M5 49; Dn4 Ds2 48; D8 45; T2 G2 63; G1 62; M1.6.7 47. — *Śloka no.:* Dn1. n4 Ds1 D8 37.

# २१६

युधिष्ठिर उवाच ।

यया बुद्ध्या महीपालो भ्रष्टश्रीर्विचरेन्महीम् ।
कालदण्डविनिष्पिष्टस्तन्मे ब्रूहि पितामह ॥ १

भीष्म उवाच ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
वासवस्य च संवादं बलेर्वैरोचनस्य च ॥ २
पितामहमुपागत्य प्रणिपत्य कृताञ्जलिः ।
सर्वानेवासुराञ्जित्वा बलिं पप्रच्छ वासवः ॥ ३
यस्य स्म ददतो वित्तं न कदाचन हीयते ।
तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम् ॥ ४
स एव ह्यस्तमयते स स्म विद्योतते दिशः ।
स वर्षति स्म वर्षाणि यथाकालमतन्द्रितः ।
तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम् ॥ ५
स वायुर्वरुणश्चैव स रविः स च चन्द्रमाः ।
सोऽग्निस्तपति भूतानि पृथिवी च भवत्युत ।
तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम् ॥ ६

ब्रह्मोवाच ।

नैतत्ते साधु मघवन्यदेतदनुपृच्छसि ।
पृष्टस्तु नानृतं ब्रूयात्तस्माद्वक्ष्यामि ते बलिम् ॥ ७
उष्ट्रेषु यदि वा गोषु खरेष्वश्वेषु वा पुनः ।

C. 12. 8036
B. 12. 223. 9
K. 12. 230. 9

## 216

1 The ref. is damaged in B7. — a ) K4 Da4 D8 T G1. 2 यथा ( for यया ). K1 सर्वपालो ( for मही° ). — b ) M7 विंदते ( for विचरेन् ). — c ) T2 कालदंडे ( for °दण्ड- ). D7 T1 G2 -विनिर्पिष्टं ( for °ष्पि- ष्टस् ). ❀ Ca : कालो जन्मान्तरीयसुकृतदुष्कृतसहकारी, तस्य दण्डो दुष्कृतफलदानम् । ❀

2 d ) Ś1 K2 बडेर्; Ds1 D5. 7 बलैर् ( for बलेर् ). Ds2 ( before corr. ) बलेर्वैरोचनो वली.

3 a ) K6 B0 Dn1. n4 D8 D2. 3. 5–8 T G1–3. 6 M1. 5–7 उपागम्य; V1 B6–9 °श्रित्य ( for °गत्य ). — 3cd is damaged in B7. — d ) Ś1 बडिं; G3 बलं ( for बलिं ). G1 राघवः ( for वासवः ).

4 a ) B7 damaged. K6 पश्य ( for यस्य ). — b ) B8 कदाचिद्धि; D5 G1 °चिन्न ( for °चन ). Da3. a4 न हीये( Da4 °जे )त कदाचन; T2 न कदा च महीयते. — c ) Ś1 बडिं; Da4 बलं ( for बलिं ). K7 D4. 9 नाव- ( for नाधि- ). — d ) D8 आचक्ष; G1 आगच्छ ( for आचक्ष्व ). Ś1 बडिं; T1 G3 बलं.

5 K4 om. ( hapl. ) 5. K6 T1 om. ( hapl. ) 5–6. Dn1. n4 D2. 3 G2 transp. 5 and 6. — a ) Ś1 K1. 2 M7 एवम्; D7 G2. 3. 6 एष ( for एव ). Ś1 K1. 2 अस्तमयते; K7 D4. 9 ह्यस्तमभ्येति ( for °मयते ). — b ) B8 न ( for स ). K7 च; D3 ( marg. as in text ) स ( for स्म ). Ś1 K1. 2 G1 स विद्योतयते दिशः; D7 T2 G2. 3. 6 स स्म द्योतयते रविः ( T2 दिशः ). — c ) G1 हि; G2 त्रि- ( for स्म ). M1 सर्वाणि ( for वर्षाणि ). D7 G3. 6 स च वर्षति वर्षाणि. — e ) Ś1 बडिं ( for बलिं ). — f ) Ś1 बडिं; D8 बलीं.

6 K6 D6. 8 T1 M1 om. ( hapl. ) 6 ( for K6 T1, cf. v. l. 5 ). Dn1. n4 D2. 3 G2 transp. 5 and 6. — a ) Ds1 वरुणाश्च- — b ) M6 स मयः ( for स रविः ). — c ) B3 पचति ( for तपति ). — d ) K4 V1 B0. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 7 T2 G1. 3 M5–7 जलं च स; D5 G2. 6 स जलं च ( D5 सं- ) ( for पृथिवी च ). K7 D4. 9 स ( for च ). V1 वहति ( for भवति ). — e ) Ś1 बडिं ( for बलिं ). K4 om. ( hapl. ) from नाधि up to बलिम् ( in 6f ). — f ) Ś1 बडिं.

7 a ) D6 त्वं ( for ते ). D2. 5 G2 भगवन् ( for मघ° ). Ś1 K1. 2. 4 नैतत्ते म( K2. 4 भ )गवन्साधु- — b ) K6 एतम्; K7 B0. 6–9 Da3. a4 Dn1. n4 D8 D2–6. 8. 9 T2 M1. 5–7 एनम्; V1 D7 T1 G1–3. 6 एवम् ( for एतद् ). T2 -पृच्छति ( for °सि ). — c ) B9 Da4 च ( for तु ). K6 B8 ( marg. as in text ) D4. 9 ब्रूयां; D9 ( also ) ब्रह्मन् ( for ब्रूयात् ). — d ) K7 D4. 9 तं ( for ते ). Ś1 बडिं; D8 बलीं; T1 बलं.

8 a ) G2 इष्टेषु ( for उष्ट्रेषु ). — b ) D4. 5. 9 यदि; D7 T1 G3. 6 श्वसु ( for अश्वेषु ). D7 T G1. 2. 6 M1. 5–7 [अ]नघ ( for पुनः ). — c ) D5 प्रविष्टो ( for वरिष्ठो ). — d ) D7 T G1–3. 6 M1. 5–7 शून्यागारप्रतिश्रयः.

C. 12. 8066
B. 12. 223. 9
K. 12. 230. 9

वरिष्ठो भविता जन्तुः शून्यागारे शचीपते ॥ ८

शक्र उवाच ।

यदि स बलिना ब्रह्मञ्शून्यागारे समेयिवान् ।
हन्यामेनं न वा हन्यां तद्ब्रह्मन्ननुशाधि माम् ॥ ९

ब्रह्मोवाच ।

मा स शक्र बलिं हिंसीर्न बलिर्वधमर्हति ।
न्यायांस्तु शक्र प्रष्टव्यस्त्वया वासव काम्यया ॥ १०

भीष्म उवाच ।

एवमुक्तो भगवता महेन्द्रः पृथिवीं तदा ।
चचारैरावतस्कन्धमधिरुह्य श्रिया वृतः ॥ ११
ततो ददर्श स बलिं खरवेषेण संवृतम् ।
यथाख्यातं भगवता शून्यागारकृतालयम् ॥ १२

शक्र उवाच ।

खरयोनिमनुप्राप्तस्तुषभक्षोऽसि दानव ।
इयं ते योनिरधमा शोचस्याहो न शोचसि ॥ १३
अदृष्टं बत पश्यामि द्विषतां वशमागतम् ।
श्रिया विहीनं मित्रैश्च भ्रष्टवीर्यपराक्रमम् ॥ १४
यत्तद्यानसहस्रेण ज्ञातिभिः परिवारितः ।
लोकान्प्रतापयन्सर्वान्यास्यस्मानवितर्कयन् ॥ १५
त्वन्मुखाश्चैव दैतेया व्यतिष्ठंस्तव शासने ।

---

9 $D_2$ om. (hapl.) 9–12. — [a]) Ś$_1$ $K_{1.2}$ $V_1$ $B_8$ (marg. as in text) यद्यहं; $K_7$ यद्यस्मिन्; $D_{4.9}$ यद्यस्मि (for यदि स). Ś$_1$ बडिना; $G_1$ हि बलिर् (for बलिना). — [b]) Ś$_1$ $K_{1.2.4}$ $D_8$ समीयि($K_1$ °य)वान्; $K_6$ समायिवान्; $V_1$ शमीयी°; $Da_4$ समेयी°; $G_2$ समाधिमान् (for समेयिवान्). — [c]) $G_2$ $M_1$ हन्याद्. $K_7$ $D_{4.9}$ चैनं; $B_8$ (marg.) मित्रं; $D_3$ (by corr. as in text).$_7$ $G_{2.3.6}$ एवं; $D_5$ एतं (for एनं). $D_5$ वै (for वा). $G_2$ हन्यात्. — [d]) $M_{5.6}$ विद्वन् (for ब्रह्मन्). $G_3$ om. अनु. $K_7$ अनुबोधि (for °शाधि). $Da_4$ $G_3$ मा (for माम्).

10 $D_2$ om. 10 (cf. v. l. 9). — [a]) $K_7$ ना स्म; $B_8$ (marg. as in text) मा त्वं (for मा स). Ś$_1$ बडिं (for बलिं). $B_8$ (marg.) हन्यान्; $Da_4$ हिंसिर्; $Dn_1$ हंसीर् (for हिंसीर्). — [b]) Ś$_1$ बडिर् (for बलिर्). $G_1$ व्ययम् (for वधम्). — [c]) $K_{6.7}$ $V_1$ $Bo_{.6-9}$ $Dn_{1.n4}$ $D_8$ $D_{8-9}$ T $G_{1-3.6}$ न्यायस् (for न्यायांस्). $K_7$ $Da_4$ $D_{4.9}$ $M_1$ प्र($K_7$ पृ)ष्टव्यं; $T_2$ द्रष्टव्यस् (for प्र°).

11 $D_2$ om. 11 (cf. v. l. 9). $M_{5.6}$ om. the ref. — [b]) $Da_4$ महेंद्रं. $Da_4$ $Dn_4$ $Ds_1$ पृथिवी (for °वीं). $B_{7.9}$ तथा; $T_1$ ततः (for तदा). — [c]) Ś$_1$ $K_{1.2.4}$ ऐरावण- (for °वत-). $K_2$ -स्कंदम्. $B_8$ (marg.) जगाम स गजस्कंधम्. — [d]) $K_{2.4}$ प्रिया (for श्रिया). $K_4$ $Ds_1$ वृत्तः; $D_4$ सह; $D_9$ [अ]न्वितः; $G_{3.6}$ ज्वलन् (for वृतः).

12 $D_2$ om. 12 (cf. v. l. 9). — [a]) $M_{5.6}$ च (for स). Ś$_1$ बडिं (for बलिं). — [b]) Ś$_1$ $K_{1.2.4}$ $Bo_{.6-8}$ $D_{6.8}$ -चेशेन; $K_6$ $Ds_1$ -चेषेन; $B_9$ -वेशेण; $Dn_4$ -वेश्वेन; $G_6$ -वर्षेण (for -वेषेण). $G_1$ संयुतं (for संवृतम्).

13 [a]) $T_2$ खरवेषम् (for °योनिम्). $T_1$ अनुप्राप्य (for °प्राप्तस्). — [b]) $Da_4$ -भक्ष्योसि; $D_6$ -अक्षेषु (for -भक्षोऽसि). $Da_4$ $M_7$ [ऽ]सि दानवः; $G_{3.6}$ सदानघ. — [c]) $G_2$ इमं (for इयं). $D_7$ $T_1$ $G_{1-3.6}$ असमा (for अधमा). $T_2$ शोच्यतामात्मनश्चास्य. — [d]) Ś$_1$ $K_{1.2}$ शोच्यो($K_1$ °च्य)स्याहो; $Da_4$ शोचसाहो; $D_7$ $T_1$ $G_{2.3.6}$ °नाहो (for °स्याहो). $Da_4$ शोचति.

14 [a]) $V_1$ $B_8$ $G_2$ च न (for बत). — [b]) $D_7$ $T_1$ $G_{3.6}$ द्विषंतं (for द्विषतां). $Da_4$ वश्यम् (for वशम्). $K_7$ आगतां. $D_6$ द्विषतां च समागतं. — [c]) $Da_4$ श्रिया विहीनमंत्रैश्च. — [d]) $K_7$ $B_9$ $D_3$ (marg. as in text).$_{4.5.7.9}$ $T_1$ $G_{1-3.6}$ $M_7$ भ्रष्टैश्वर्य- (for भ्रष्टवीर्य-). $T_2$ प्रभ्रष्टैर्यः पराक्रमः.

15 = 12. 217. 2. $D_7$ T $G_{1-3.6}$ om. 15. — [a]) Ś$_1$ $K_{1.2.4}$ यत्तु ($K_1$ °त्त्वं) दंति-; $Da_4$ यत्र ध्यान- (for यत्तद्यान-). $K_{6.7}$ $V_1$ $Bo_{.6-9}$ $Da_{3.a4}$ $Dn_{1.n4}$ $D_8$ $D_{2-6.8.9}$ -सहस्रैस्त्वं ($Da_4$ °स्त्वां) (for °स्रेण). — [c]) $B_8$ (marg. as in text) लोकांस्तु (for लोकान्प्र-). $D_4$ प्रतारयन् (for °पयन्). — [d]) Ś$_1$ $K_{1.2}$ न वितर्कयन् (for अवितर्कयन्).

16 [a]) $Da_4$ $T_2$ तन्- (for त्वन्-). $K_2$ $D_8$ -मुखाच् (for -मुखाश्च). $V_1$ $Bo_{.6-9}$ चापि; $D_8$ एव (for चैव). $Da_4$ दैतेयान्. — [b]) $Dn_1$ व्यातिष्ठंस्; $G_1$ ह्यतिष्ठंस्. $Da_4$ शासनैः; $G_2$ शासनं. — [c]) $D_6$ प्रहृष्ट- (for अकृष्ट-). $Bo_{.7.9}$ -सस्या; $B_6$ (marg. as in text) -शस्या; $D_6$ -शय्या (for -पच्या). $K_{6.7}$ $V_1$ $Bo_{.6}$ (marg. as in text).$_{7.9}$ $Da_{3.a4}$ $Dn_{1.n4}$ $D_8$ $D_{2-6.8.9}$ च मही; $G_1$ पदवी (for पृथिवी). ❀ Cn: अकृष्ट-

C. 12. 8168
B. 12. 225. 21
K. 12. 232. 21

सा ते पादं तितिक्षेत समर्था हीति मे मतिः ॥ २१

श्रीरुवाच ।

एष मे निहितः पादो योऽयं भूमौ प्रतिष्ठितः ।
द्वितीयं शक्र पादं मे तस्मात्सुनिहितं कुरु ॥ २२

शक्र उवाच ।

आप एव मनुष्येषु द्रवन्त्यः परिचारिकाः ।
तास्ते पादं तितिक्षन्तामलमापस्तितिक्षितुम् ॥ २३

श्रीरुवाच ।

एष मे निहितः पादो योऽयमप्सु प्रतिष्ठितः ।
तृतीयं शक्र पादं मे तस्मात्सुनिहितं कुरु ॥ २४

शक्र उवाच ।

यस्मिन्देवाश्च यज्ञाश्च यस्मिन्वेदाः प्रतिष्ठिताः ।
तृतीयं पादमग्निस्ते सुधृतं धारयिष्यति ॥ २५

श्रीरुवाच ।

एष मे निहितः पादो योऽयमग्नौ प्रतिष्ठितः ।
चतुर्थं शक्र पादं मे तस्मात्सुनिहितं कुरु ॥ २६

शक्र उवाच ।

ये वै सन्तो मनुष्येषु ब्रह्मण्याः सत्यवादिनः ।
ते ते पादं तितिक्षन्तामलं सन्तस्तितिक्षितुम् ॥ २७

श्रीरुवाच ।

एष मे निहितः पादो योऽयं सत्सु प्रतिष्ठितः ।
एवं विनिहितां शक्र भूतेषु परिधत्स्व माम् ॥ २८

शक्र उवाच ।

भूतानामिह वै यस्त्वा मया विनिहितां सतीम् ।

---

$M_5$ विहितः (for नि°). — [b]) Bo सत्सु (for भूमौ). $G_2$ प्रतिष्ठितं. — [c]) Bo तृतीयं (for द्वि°). $V_1$ transp. पादं and मे. — [d]) $K_{2.7}$ सं- (for सु-).

23 $D_8$ om. 23 (cf. v. l. 4). $M_1$ om. 23[abc] (cf. v. l. 21). — [b]) $K_7$ $D_{4.9}$ द्रवत्यः; $D_7$ T $G_{1-3.6}$ द्रवंति. $K_6$ $V_1$ $B_6$ (marg. as in text).8 $Da_3$ $Dn_{1.n4}$ $D_s$ $D_{2.3.5}$ Cp -चारिणीः; Bo.7.9 -चारिणी; $D_7$ T $G_{1-3.6}$ $M_{5.7}$ -धारणे; $M_6$ -धारिणी (for -चारिकाः). — [c]) $K_1$ तितिक्षंतम्; $D_5$ तितीक्षंताम्. — [d]) $D_7$ तितीक्षितुं.

24 $D_8$ om. 24 (cf. v. l. 4). $Da_4$ om. the ref. — [a]) $D_4$ om. from हितः up to यस्मिन् (in 25[a]). $D_6$ $G_2$ निहतः (for निहितः). $K_7$ पादौ (for पादो). — [b]) $K_4$ प्रतिष्ठिताः. — [c]) $M_1$ द्वितीयः (for तृतीयं). $K_4$ चक्र- (for शक्र). $V_1$ transp. पादं and मे.

25 $D_8$ om. 25 (cf. v. l. 4). $D_4$ om. up to यस्मिन् (cf. v. l. 24). — [a]) $K_{4.6}$ $V_1$ Bo.6–9 $Da_{3.a4}$ $Dn_{1.n4}$ $D_s$ $D_{2.3.5}$ $T_2$ $M_5$ वेदाश्च; $D_7$ $T_1$ $G_{1-3.6}$ यज्ञाश्च (for देवाश्च). $K_7$ $D_{4.6.7.9}$ $T_1$ $G_{1-3.6}$ वेदाश्च (for यज्ञाश्च). — [b]) $K_6$ Bo.6–9 $Da_{3.a4}$ $Dn_{1.n4}$ $D_s$ $D_{2.3.5.7}$ T $G_{2.3.6}$ $M_5$ देवाः; $K_7$ $D_{4.6.9}$ $G_1$ यज्ञाः (for वेदाः). — [c]) $K_7$ तृतीय- (for °यं). $B_9$ om. पाद. $Ś_1$ $K_{1.2}$ च (for ते). — [d]) $B_6$ स्वधृतं; $D_7$ $T_1$ $G_{1-3.6}$ सुवृत्तं; $T_2$ सुभृतं (for सुधृतं).

26 $D_8$ om. 26 (cf. v. l. 4). — [a]) $Da_4$ ते (for मे). $K_4$ निहित-; $D_6$ $G_2$ निहतः. — [c]) $G_2$ चक्र- (for शक्र). $K_6$ यदि मे; $V_1$ मे पादं (by transp.). — [d]) $K_7$ सं- (for सु-).

27 $D_8$ om. 27 (cf. v. l. 4). — [b]) $Ś_1$ $K_{1.2}$ $Da_4$ $D_6$ ब्राह्मणाः ($Da_4$ °णः; $D_6$ °ण्याः) (for ब्रह्मण्याः). — [c]) $D_5$ ते वै; $D_7$ ये ते; $T_1$ $G_{1-3.6}$ एते; $M_6$ ततो (for ते ते). $M_6$ वादं (for पादं). $K_6$ तितिक्षंतीम्. — [d]) $K_6$ तितीक्षितुं.

28 $K_1$ $D_8$ om. 28 (for $D_8$, cf. v. l. 4). — [a]) $Dn_4$ निर्मितः; $D_6$ निहतः; $M_7$ निहितं (for °तः). — [b]) $G_1$ प्रतिष्ठितं. — [c]) $K_{4.6}$ Bo $Da_3$ $Dn_{1.n4}$ $D_s$ $D_{2.3}$ $M_{1.7}$ हि; $D_7$ T $G_{1-3.6}$ सु- (for वि-). $K_6$ $T_2$ निहितं; $D_7$ $T_1$ $G_2$ $M_{1.6}$ -निहिताः ($M_6$ °तः); $G_1$ -निहताः (for -निहितां). — [d]) $Ś_1$ $K_2$ विनिधत्स्व; $D_4$ $G_1$ परिधश्च ($G_1$ °स्व) (for °धत्स्व).

29 $D_8$ om. 29 (cf. v. l. 4). $K_1$ om. the ref. — After the ref., Kumbh. ed. Cv ins.:

646* भूमिशुद्धिं ततः कृत्वा सद्भिः संतर्पयन्ति ये ।
भूतानि च यजन्त्यग्नौ तेषां त्वमनपायिनी ।
ये क्रियाभिः सुरक्ताभिर्हेतुयुक्ताः समाहिताः ।
ज्ञानवन्तो विवत्सायां लब्धा माद्यन्ति योगिनः ।

[ (L. 4) ❀ Cv : माद्यन्ति संतोषं कुर्वन्ति । ❀ ]

— [a]) $K_6$ $V_1$ Bo.6–9 $Da_{3.a4}$ $Dn_{1.n4}$ $D_s$ $D_{2.3}$ transp. वै and यस्. $K_{1.4}$ $V_1$ Bo.6–9 $Da_{3.a4}$ $Dn_{1.n4}$ $D_s$

उपहन्यात्स मे द्विष्यात्तथा शृण्वन्तु मे वचः ॥ २९
भीष्म उवाच ।
ततस्त्यक्तः श्रिया राजा दैत्यानां बलिरब्रवीत् ।
यावत्पुरस्तात्प्रतपेत्तावद्वै दक्षिणां दिशम् ॥ ३०
पश्चिमां तावदेवापि तथोदीचीं दिवाकरः ।
तथा मध्यंदिने सूर्यो *अस्तमेति यदा तदा ।
पुनर्देवासुरं युद्धं भावि जेतास्मि वस्तदा ॥ ३१
सर्वाँल्लोकान्यदादित्य एकस्थस्तापयिष्यति ।
तदा देवासुरे युद्धे जेताहं त्वां शतक्रतो ॥ ३२
शक्र उवाच ।
ब्रह्मणास्मि समादिष्टो न हन्तव्यो भवानिति ।
तेन तेऽहं बले वज्रं न विमुञ्चामि मूर्धनि ॥ ३३
यथेष्टं गच्छ दैत्येन्द्र स्वस्ति तेऽस्तु महासुर ।
आदित्यो नावतपिता कदाचिन्मध्यतः स्थितः ॥ ३४
स्थापितो ह्यस्य समयः पूर्वमेव स्वयंभुवा ।
अजस्रं परियात्येष सत्येनावतपन्प्रजाः ॥ ३५

C. 12. 8183
B. 12. 225. 35
K. 12. 232. 40

---

D2. 3. 7 T G1–3. 6 M1. 5–7 त्वां (for त्वा). K7 D4–6. 9 भूतेषु तु मया यस्त्वाम्. — [b]) K7 D4–6. 9 एवं (for मया). D5 सु- (for वि-). K4. 7 -निहतां (for -विहितां). — [c]) B3 ते (for मे). K4. 6 Bo. 6. 7. 9 Da3. a4 Dn1. n4 D3 D2. 3 ध्वंस्यस्; K7 D4. 6. 7. 9 T G1–3. 6 M1. 5–7 द्वेष्यस्; V1 B3 हिंस्यस्; B6 (marg.) D5 वध्यस् (for द्विष्यात्). — [d]) K7 D4–6. 9 तस्मात् (for तथा).

30 D8 om. 30 (cf. v. l. 4). K6. 7 Bo. 6. 7. 9 Dn1. n4 D3 D2–6. 9 M5 om. the ref. — After the ref., Kumbh. ed. Cv ins.:

647* तथेति चोक्त्वा सा भ्रष्टा सर्वलोकनमस्कृता ।
वासवं पालयामास सा देवी कमलालया ।

[(L. 1) Cv वत्सा (gloss: कुमारी श्रीवत्सरूपा वा) (for भ्रष्टा).]

— [a]) K7 D4. 6. 9 राजन् (for राजा). — [b]) K7 D4. 6. 9 पतिर् (for बलिर्). — Before 30[cd], K4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 D3 D2–6. 9 T2 M1. 6. 7 ins. बलिरुवाच. — [c]) D6 प्रतिपत् (for प्रतपेत्).

31 D8 om. up to तथा (cf. v. l. 4). — [a]) Da4 पश्चिमा. — [b]) Da4 तथो दिवि (for तथोदीचीं). — [c]) D8 मध्य- (for मध्यं-). Ds1 -दिन- (for -दिने). — [d]) Ś1 K1. 2 चास्तम्; K4 B6 (orig.) Da4 T G1. 3 M1. 5–7 Cv [s]थास्तम्; K6. 7 V1 Bo. 6 (marg.). 7–9 Da3 Dn1. n4 D3 D2–6. 8. 9 Ca. p नास्तम्; D7 G6 [s]-धास्तम्; G2 यथा (for *अस्तम्). T G1 यथा (for यदा). D9 om. तदा. ❋ Ca. p: मध्यंदिने नास्तमेति, न शान्तकिरणो भविष्यति, अत्यन्ततेजोमाली लोकदाहाय भावी ॥ Cv: सूर्योऽथास्तम्, उदयमारभ्यास्तमयपर्यन्तं चतुर्दिक्षु तपन्सूर्यो यदा मध्यंदिने अस्तं, प्रभाया अल्पतामेति तदा काले। स कालो विपरीतत्वादसुरजयकाल इति भावः। ❋ — [e]) Ś1 K1. 2. 4 पुरा (for पुनर्). K7 देवासुरे. B9 om. युद्धं. — [f]) M7 (sup. lin. as in text) भवेज् (for भावि). K7 D4. 7. 9 T G1–3. 6 M1. 5–7 वै; B8 ते (for वस्).

32 [a]) K6. 7 Bo. 6–9 Da3. a4 Dn1. n4 D3 D2–9 T G1–3. 6 M1. 5–7 सर्व- (for सर्वाँल्). D5 T2 M1. 6 यथा (for यदा). — [b]) K4 एकतः; D7 T G1–3. 6 M1. 5–7 मध्यस्थः (for एकस्थस्). K4. 6. 7 Da4 T G1. 2. 6 M6 स्थापयिष्यति (for ताप°). — [c]) D7 T1 G1–3. 6 तस्मिन् (for तदा). B9 देवासुरैर्. — [d]) Ś1 K1. 2. 4 V1 वि-जेताहं; B6–9 M1. 6 जेताहं वै (B8 ते; M1. 6 त्वा); D7 T G1–3. 6 जेता त्वाहं (for जेताहं त्वां).

33 [a]) K7 ब्राह्मणोस्मि (for ब्रह्मणास्मि). G2 सदा-दिष्टो (for समादिष्टो). — [c]) Ś1 K1 (before corr.) वडे (for बले). — [d]) K7 D4. 6. 9 मुंचाम्यद्य; D7 T1 G1–3. 6 मुंचामि तु (for विमुञ्चामि).

34 [a]) Ś1 K1. 2 यथेच्छं; Da4 यथेंद्रं (for यथेष्टं). Da4 दैत्येंद्रं. — [b]) Ś1 K1. 2. 4 तिष्ठ वा त्वं (for स्वस्ति तेऽस्तु). Da4 D4 महासुरः (D4 °रं). — [c]) Dn1 नैव; D7 T G1. 3. 6 M5 (sup. lin.). 7 नाति-; G2 M1. 5 (orig.). 6 नाभि-; Ca नाव- (as in text). — [d]) Ś1 K1. 2 मध्यगः; T2 °वत् (for °तः). K7 D4. 7. 9 T1 G1. 3. 6 कदाचिन्मध्यमास्थितः.

35 [c]) Dn1 Ds1 परिपाति (for परियाति). T G3 M5. 7 अर्कस्; G1 एकस् (for एष). Ś1 K1. 2. 4 अजस्रं परियायाद्धि; D7 G6 °स्रमपयादर्कस्; G3 M1. 6 °स्रं पर्यटं (G3 °या)त्यर्कस्. — [d]) Bo [अ]वतपत्; B3 वितपन्; D5. 6 [अ]त(D6 °ता)पयन् (for [अ]वतपन्). Ś1 K1. 2. 4 इत्यंते नातपत्प्रजाः; K7 D4. 9 एति वा तापयन्प्रजाः; D7 T G1–3. 6 M1. 5–7 तेजसा प्रतपन्प्रजाः.

C. 12. 8184
B. 12. 225. 36
K. 12. 232. 40

अयनं तस्य षण्मासा उत्तरं दक्षिणं तथा ।
येन संयाति लोकेषु शीतोष्णे विसृजन्रविः ॥ ३६
भीष्म उवाच ।
एवमुक्तस्तु दैत्येन्द्रो बलिरिन्द्रेण भारत ।
जगाम दक्षिणामाशामुदीचीं तु पुरंदरः ॥ ३७
इत्येतद्बलिना गीतमनहंकारसंज्ञितम् ।
वाक्यं श्रुत्वा सहस्राक्षः खमेवारुरुहे तदा ॥ ३८

इति श्रीमहाभारते शान्तिपर्वणि अष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥

## २१९

भीष्म उवाच ।
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
शतक्रतोश्च संवादं नमुचेश्च युधिष्ठिर ॥ १
श्रिया विहीनमासीनमक्षोभ्यमिव सागरम् ।
भवाभवज्ञं भूतानामित्युवाच पुरंदरः ॥ २
बद्धः पाशैश्च्युतः स्थानाद्द्विषतां वशमागतः ।
श्रिया विहीनो नमुचे शोचस्याहो न शोचसि ॥ ३
नमुचिरुवाच ।
अनवाप्यं च शोकेन शरीरं चोपतप्यते ।
अमित्राश्च प्रहृष्यन्ति नास्ति शोके सहायता ॥ ४

---

36 a) K2 अनयं; B6. 9 अयने (for °नं). Ś1 K1. 2 षाण्मास; K4 V1 B0. 6. 7. 9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 षण्मासान्; K7 D4. 6. 9 T2 M7 षण्मासम्; G1 °साद् (for °सा). — b) B6 तदा (for तथा). — c) D7 T1 G1–3. 6 M7 तेन (for येन). K7 संयांति. — d) K2. 4 शीतोष्णो; Da4 शितोष्णे. K7 B6. 7. 9 Da3. a4 D4. 6. 9 M1. 5. 6 विभजन् (for विसृ°).

37 b) Da4 भारतः. — c) D6 आसम् (for आशाम्). — d) K7 Da4 उदिची (Da4 °चि). D4 पुरंदर. ❀ Cs: दक्षिणामाशां पातालं ... उदीचीं स्वर्गम् । ❀

38 a) K6 Ds D3 एवं (for एतद्). Ś1 बडिना (for बलिना). — b) Ś1 K1 -संयुतं; K2 (*sup. lin.*) -संयंतं; B6. 9 Da3. a4 G1 -संज्ञकं (G1 °तं); Ds1 -संज्ञिते; D5 -संज्ञिकं (for °तम्). — d) K7 तथा; D5 ततः (for तदा). K6 V1 B0 Ds D3 स्वर्गमारुरुहे तदा.

Colophon. — *Sub-parvan :* Ś1 K1. 2. 4. 6. 7 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2–4. 6–9 T G1. 3. 6 M1. 5–7 मोक्षधर्म. — *Adhy. name :* Ś1 K1. 2. 4 V1 B0. 6. 9 Dn1. n4 Ds D2. 3. 8 M7 श्रीसंनिधानं; K7 शक्रबलिसंवादः; B8 Da3. a4 बलिवासवसंवादे श्रीसंनिधानं; D4. 9 बलिवासवसंवादे श्रीसंनिवेशः; D5. 6 श्रीवासवसंवादः; D7 G2. 3. 6 बलिवासवसंवादः समासः; M1. 6 बलिवासवसंवादे श्रीनिधानं; M5 बलिवासवसंवादः. — *Adhy. no.* (figures, words or both): B7 Dn1 D7 T1 G1. 3. 6 M5 52; Dn4 Ds2 51; Ds1 53; T2 G2 66; M1. 6. 7 50. — *Śloka no.:* Dn1 38; Dn4 37.

219

Before 1, Kumbh. ed. ins. :

648* युधिष्ठिर उवाच ।
व्यसनेषु निमग्नस्य किं श्रेयस्तद्ब्रवीहि मे ।
भूय एव महाबाहो स्थित्यर्थं तं ब्रवीहि मे ।

1 a) V1 B6–9 Da4 [अ]पि (for [ए]व). — d) Da4 युधिष्ठिरः.

2 K7 D4. 9 om. (hapl.) $2^{a}$–$3^{b}$. Da4 repeats $2^{ab}$ after $3^{ab}$. — a) Da4 (second time) आश्रीनम् (for आसी°). — c) ❀ Ca. n: भवाभवज्ञं उत्पत्तिप्रलयज्ञम् । ❀ — d) B7 पुरंदर.

3 K7 D4. 9 om. $3^{ab}$ (cf. v. l. 2). Before 3, D5. 6 T2 M1. 6. 7 ins. शक्र उवाच. — a) T2 बद्धं; G3 बद्ध- (for बद्धः). K6 परैश् (for पाशैश्). K4 श्रुतः; M1 च तत् (for च्युतः). — After $3^{ab}$, Da4 repeats $3^{ab}$ and om. $3^{cd}$. — c) K6 विहीन (for °नो). — d) K2 D7 T1 G3. 6 शोच्योस्याहो; G1 शोचोस्यहो (for शोचस्याहो).

4 D8 नशुचिर् (for नमु°). — a) K7 अनिवार्यं; Da4 D4 G6 अनवाप्य; M1. 6. 7 (*sup. lin.* as in text)

तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत् ।
संतापाद्भ्रश्यते रूपं धर्मश्चैव सुरेश्वर ॥ ५
विनीय खलु तद्दुःखमागतं वैमनस्यजम् ।
ध्यातव्यं मनसा हृद्यं कल्याणं संविजानता ॥ ६
यथा यथा हि पुरुषः कल्याणे कुरुते मनः ।
तदैवास्य प्रसीदन्ति सर्वार्था नात्र संशयः ॥ ७
एकः शास्ता न द्वितीयोऽस्ति शास्ता
गर्भे शयानं पुरुषं शास्ति शास्ता ।
तेनानुशिष्टः प्रवणादिवोदकं
यथा नियुक्तोऽस्मि तथा वहामि ॥ ८
भावाभावावभिजानन्गरीयो
जानामि श्रेयो न तु तत्करोमि ।
आशासु धर्म्याः सुहृदां सुकुर्व-
न्यथा नियुक्तोऽस्मि तथा वहामि ॥ ९
यथा यथास्य प्राप्तव्यं प्राप्नोत्येव तथा तथा ।
भवितव्यं यथा यच्च भवत्येव तथा तथा ॥ १०

C. 12. 8197
B. 12. 226. 10
K. 12. 233. 11

°वाप्यश्च (for °वाप्यं). K4.6 V1 B0.6.7.8 (marg.).9 Dn1.n4 Ds D2.3.5.6.8 अनिवार्येण (B6.9 °र्वाप्येन) शोकेन. —b) K6 B7.8 (marg.) -पद्यते; K7 D4.9 -ताप्यते; D7 T G1-3.6 M1.5-7 -शुष्यति (for -तप्यते). —c) Ś1 K2.4 प्रतुष्यंति (for प्रहृ°). —d) K6 V1 B0.6-9 Da3.a4 Dn1.n4 Ds D2.3.5.8 transp. नास्ति and शोके. D4.9 सहायिता (for °यता). ❀ Cn: सहायता शोकस्य दुःखापनोदे हेतुत्वं नास्तीत्यर्थः ॥ Cs: नष्टस्यैश्वर्यादेः प्राप्तौ न शोकः सहकारी । ❀

5 a) B6 (marg. as in text).7.9 Da3.a4 D5 तस्मिन् (for तस्मात्). —b) Ś1 K1.2 एव (for ह्येव). —c) K7 भ्रंश्यते. — After 5abc, K6 V1 B0.6-9 Da3.a4 Dn1.n4 Ds D2.3.5.8 ins.:

649* संतापाद्भ्रश्यते श्रियः ।
संतापाद्भ्रश्यते चायुर्.
[ (L. 1) B0 श्रियं. ]

—d) G2 धर्मं. K7 D4.6.9 सुरोत्तम (for सुरेश्वर).

6 a) Da4 T2 तं; Ds1 तु (for तद्). D5 विभो कथं नु ते दुःखम्. ❀ Cn.p.s: विनीय निरस्य (Cp: खण्डयित्वा) । ❀ —b) Ś1 K2.4 वै मनः स्वकं; K1 D7 T G1-3.6 M1.5-7 वै मनःसुखं; Da3.a4 वैमनःस्वजं (for °स्यजम्). —c) T2 यतव्यं (for ध्या°). V1 B0.7 Da3 कृत्यं; Da4 नूत्यं; Dn4 दूष्यं (for हृद्यं). —d) V1 B8 सु-; D7 T1 G1-3.6 वै (for सं-). D6 -विधानता.

7 a) K6 B0 Da3 Dn1.n4 Ds D2.3.8 यदा यदा (for यथा यथा). —c) K1 D4.6.9 तदेवास्य; K6 Dn1.n4 Ds D2.3.8 तदा तस्य; D7 T G1-3.6 M1.5-7 तथैवास्य (for तदै°). K6 Dn1.n4 Ds D2.3.7.8 T G1-3.6 M1.5-7 प्रसिध्यंति (for प्रसीदन्ति). V1 B6-9 Da3.a4 D5 तथा तथा हि (V1 B6 [marg.].7-9 °थास्य) सिध्यंति; B0 तदा तदास्य सि°. —d) Ś1 (*sup. lin.* as in text) K2.4 यथार्था; B9 सर्वथा (for सर्वार्था).

8 = (var.) 2.57.8. —b) D6 शयनं (for शयानं). Da4 गर्भे शयानाच्छ्रेयो न तु तद्वै करोमि आशा (sic). —c) D4 om. from शिष्टः up to न तु (in 9b). K6.7 B0.6.7.8 (marg. as in text).9 Da3.a4 Dn1.n4 Ds D2.3.5.6.8.9 -युक्तः (for -शिष्टः). Ś1 K1.2.4 प्रवदाद्; D6 ब्रह्मणाद्; G1 प्रणवाद् (for प्रवणाद्). ❀ Ca: प्रवणात् निम्नात् निम्नमुद्दिश्येत्यर्थः । ल्यब्लोपे पञ्चमी । ❀ —d) B7 damaged; D6 [s]स्मि (for ऽस्मि). K7 M5 करोमि; D7 T1 G1.3.6 M1.6.7 भवामि (for वहामि).

9 D4 om. up to न तु (cf. v. l. 8). K7 Da4 D5.7 om. (hapl.) 9; V1 reads it on marg. —a) K4 D9 भवाभवं; B0 Da3 Ds2 D3 Cn भवाभवौ; D8 भवाभवैश्च; Cnp भावाभावाव् (as in text). K4.6 V1 B0.6-8 Da3 Dn1.n4 Ds D2.3.8.9 त्व( D9 त्वा )भिजानन्; B3 (marg.).9 त्यजति जानन् ( B9 जनो); D6 चाभिजा° (for अभिजा°). Ś1 K1.2 भावा भवंत्यामिजन्यं गरीयो. —b) D6 ज्ञानाद्वै; M1.5.6 ज्ञानात् (for जानामि). K1 श्रियो. K4 Cs तद्वै (for तत्). K6 B0.6-9 Da3 Dn1.n4 Ds D2.3.8 ज्ञानाच्छ्रेयो न तु तद्वै करोमि. —c) Ś1 K2 आशाः सुशर्म्याः; K1 आशाः सुशंयः; K4 B6 (marg.).9 आशासु शर्म्या; D4.9 °सु सर्वा; D6 M5 °सु धर्मा; T1 G3.6 आशां सुधर्म्यां; T2 आशास्तु धर्म्याः; G1.2 आशाः सुधर्म्यां (G2 °र्मां); M6 आशासु हर्म्या (for °सु धर्म्याः). K6 B0.6-8 Da3 Dn1.n4 Ds D2-4.6.8.9 सुप( B7 °क )रा; B9 T2 M1.5-7 सुहृदा (for °दां). K1 उक्तवं कुर्वन् (sic); B9 [आ]शु कु°; T1 G3.6 स कु° (for सुकु°). —d) D4.6.9 M5 करोमि; T2 G1.2 M1.6.7 भवामि (for वहामि).

10 V1 om. (hapl.) 10ab. —b) Da4 एवं (for एव). D6 यथा यथा. — K6.7 Ds1 om. (hapl.) 10cd.

C. 12. 8198
B. 12. 226. 11
K. 12. 233. 12

यत्र यत्रैव संयुङ्क्ते धाता गर्भं पुनः पुनः ।
तत्र तत्रैव वसति न यत्र स्वयमिच्छति ॥ ११
भावो योऽयमनुप्राप्तो भवितव्यमिदं मम ।
इति यस्य सदा भावो न स मुह्येत्कदाचन ॥ १२
पर्यायैर्हन्यमानानामभियोक्ता न विद्यते ।
दुःखमेतत्तु यद्द्वेष्टा कर्ताहमिति मन्यते ॥ १३
ऋषींश्च देवांश्च महासुरांश्च
त्रैविद्यवृद्धांश्च वने मुनींश्च ।
कान्नापदो नोपनमन्ति लोके
परावरज्ञास्तु न संभ्रमन्ति ॥ १४
न पण्डितः क्रुध्यति नापि सज्जते
न चापि संसीदति न प्रहृष्यति ।
न चार्थकृच्छ्रव्यसनेषु शोचति
स्थितः प्रकृत्या हिमवानिवाचलः ॥ १५
यमर्थसिद्धिः परमा न हर्षये-
त्तथैव काले व्यसनं न मोहयेत् ।
सुखं च दुःखं च तथैव मध्यमं
निषेवते यः स धुरंधरो नरः ॥ १६
यां यामवस्थां पुरुषोऽधिगच्छे-
त्तस्यां रमेतापरितप्यमानः ।

---

V1 Ds2 read 10cd on marg. — d) M7 एवं (for एव).

11 a) K2.4 संयुक्तं; K6 V1 B0.7.8 Dn1.n4 Ds D2.3.5.7.8 T G1-3.6 °क्तो; B6 Da4 तं युक्ते (for संयुङ्क्ते). — b) K6 V1 B0.7.8 Da3 Dn1.n4 Ds D2-4.8 धात्रा गर्भे; B6.9 Da4 D5 धाता गर्भे; D7 T G1-3.6 धात्रा गर्भः (D7 T1 °र्भं) (for धाता गर्भं). K1 om. from the first पुनः up to भवितव्य (in 12b). — c) B7.9 Da3 वसते (for वसति). — d) B7 partly damaged. Ds2 D7 T1 G1-3.6 तत्र (for यत्र).

12 K1 om. up to भवितव्य (cf. v. l. 11). — a) K7 D4.9 सोहमेवम् (for भावो योऽयम्). — b) D7 T G1-3.6 M5.7 मया; M1.6 मयि (for मम). — c) V1 तस्य (for यस्य). — d) K1 transp. न and स. K7 V1 B6.7.8 (marg. as in text). 9 Da3.a4 D4.6.7.9 T G1-3.6 M1.6.7 शोचेत् (for मुह्येत्). D6 कदा मम (for कदाचन).

13 With 13, cf. 12. 220. 33. — a) D4 पर्यायै (for पर्यायैर्). — b) Ś1 K1.2.4 अभिशक्ता; K6 V1 D8 D7 T G2.3.6 M1.5-7 C8 °षंगो; K7 D4.9 परित्राता; Da4 अभिप्रोक्ता; D2 °युक्तां (for °योक्ता). K2 नमंति वै (for न विद्यते). ❀ Ca (reading अभिषक्ता): अभिषक्ता अपकर्ता ॥ Cs.v अभिषङ्गः पराभवः (Cv: अभिषङ्ग एकस्थान एव संबन्धः)। ❀ — c) M1.6.7 सुखम् (for दुःखम्). B8 (marg.) Dn4 D6 एव (for एतत्). K1.2 D8 यो; B8 तद् (for यद्). B8 D6 द्वेषात् (for द्वेष्टा). — d) T2 मन्यसे.

14 b) G2 त्रैविद्या- (for त्रैविद्य-). D7 T G1-3.6 महा- (for वने). — c) Ś1 K1.2.4 Da4 T2 G3.6 M7 कानापदो; D7 T1 G1.2 ताना° (for कान्ना°). V1 नोपपतंति; B8 नो(marg. वो)पनयंति; D7 T1 G1-3.6 नाभिभवंति (for नोपनमन्ति). K7 D4.6.9 काले (for लोके). — d) V1 च (for तु). K1 न नश्यसंति; Dn4 न शंभ्रमंति. ❀ Cn: परावरज्ञाः सदसद्वस्तुविदः ॥ Cs: सुरनरादिकर्मपराधीनभूताः। ❀

15 a) Da4 तं (for न). D8 क्रुष्यति; G2 कुप्यति (for क्रुध्यति). Ś1 K1.2.4 नाभियुज्यते; K6 V1 नाभिसजते; K7 D4.7.9 T G1-3.6 M1.5-7 नाभिषज्यते; Da4 corrupt; Dn1 D8 नाभिपद्यते; Ds1 नाभिमजते; Ds2 नाभिषजते; D2.8 नोपसज्जते; D8 नापि पद्यते (for नापि सज्जते). — c) B8 (orig.) वापि; B8 (marg.) चार्थ-; Dn1 चाति- (for चार्थ-). D6 -पृच्छ-; T2 -कृच्छ्रे (for -कृच्छ्र-). Da4 -व्यसनेषु; T2 -व्यसनेन (for -व्यसनेषु). K4.6 V1 B0.6.7.9 Da3.a4 Dn1.n4 Ds D2.3.5.8 M1.6.7 शोचते; D6 शोचिते (for शोचति). — d) Ś1 K1.2 V1 B8 T2 G1.2 स्थिरः; D7 G6.6 स्थिर- (for स्थितः). K1.2 हि सर्वान् (for हिमवान्). B6 (marg. as in text) स्थिरः (for [अ]चलः).

16 a) K4 यमार्थ-; B8 (marg. as in text) यदर्थ-; Ds1 यमर्थे (for °र्थं-). G1.2 परमं (for °मा). Da3 Dn1.n4 मोहयेत् (for हर्षं°). — b) D3.5 काल- (for काले). Da3 व्यसने. G1 मे भवेत् (for मोहयेत्). — c) K7 D4.9 मध्यगं (for °मं). — d) Da4 निषेव्यते. K4 सु- (for स). B8 transp. धुरंधरो and नरः.

17 a) K2.7 D4.9 या; D7 T G1-3.6 यो (for यां). — b) T2 त्वमेता (for रमेत). V1 -वर्तमानः (for -तप्यमानः). — c) K7 D4-6.9 T G1.2 प्रवृत्तं; G3.6 M7

एवं प्रवृद्धं प्रणुदेन्मनोजं
संतापमायासकरं शरीरात् ॥ १७
तत्सद: स परिषत्सभासद:
प्राप्य यो न कुरुते सभाभयम् ।
धर्मतत्त्वमवगाह्य बुद्धिमा-
न्योऽभ्युपैति स पुमान्धुरंधर: ॥ १८
प्राज्ञस्य कर्माणि दुरन्वयानि
न वै प्राज्ञो मुह्यति मोहकाले ।
स्थानाच्च्युतश्चेन्न मुमोह गौतम-
स्तावत्कृच्छ्रामापदं प्राप्य वृद्ध: ॥ १९
न मन्त्रबलवीर्येण प्रज्ञया पौरुषेण वा ।
अलभ्यं लभते मर्त्यस्तत्र का परिदेवना ॥ २०
यदेवमनुजातस्य धातारो विदधु: पुरा ।
तदेवानुभविष्यामि किं मे मृत्यु: करिष्यति ॥ २१
लब्धव्यान्येव लभते गन्तव्यान्येव गच्छति ।
प्राप्तव्यान्येव प्राप्नोति दु:खानि च सुखानि च ॥ २२ C. 12. 8210 B. 12. 226. 22 K. 12. 233. 23

---

प्रवृत्त: (for प्रवृद्धं). Ś1 K1 प्रनुदेन्; K4 प्रणुदेद्; K6 Da3 Dn1. n4 Ds D2. 3. 8 M6 °दन् (for °देन्). Ds D5. 7 G1 Cs मनोजवं; M1. 5 °ज्ञं (for °जं). ❀ Cs (reading मनोजवम्): अविवेकम्। ❀ —[d]) K2. 4. 6. 7 B6. 8 (marg. as in text) Da3 Dn1. n4 Ds1 D2. 6. 8 T2 M1. 5–7 संतापयामास (for °मायास-). K6 Ds D2 शरीरं; D5 °रवान् (for °रात्). D7 T1 G1. 2 संतापनीयं सकलं शरीरात् (D7 T1 °रवान्).

18 [a]) K4. 6. 7 Da3. a4 Dn1. n4 Ds D2. 3. 8 G3. 6 M1. 5 न तत्सद:; D6 सत्सद:; D7 सुस्सद:; T1 संतत्सद:; T2 सवत्सदं; G1 स्वसत्सद:; G2 सुसत्सद:; M6 स तत्सद:; M7 ससत्सद: (for तत्सद:). K4 Da3 Dn1. n4 D2. 6. 8 सत्परिषत्; K6 B6 Ds D3 संपरि°; K7 Da4 D4. 5. 9 सुपरि°; Bo परि°; D7 T G1–3. 6 M5 प(M5 पा)रिषद:; M7 स परिषद: (for स परिषत्). K6. 7 V1 Bo. 6–9 Da3 Dn1. n4 Ds D2. 3. 5. 6. 8 सभा च सा (K7 यां); Da4 स्वभावसा (for सभासद:). —[b]) K6. 7 V1 Bo. 6–9 Da3. a4 Ds D2. 3. 5. 6. 8 प्राप्य यो न (Ds2 न:); D7 T G1–3. 6 संप्राप्य यो न (D7 T1 G1. 2 नु) (for प्राप्य यो न). K1 सतां भयं; K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 T G1–3. 6 M1. 5–7 सदा भयं; K7 D4. 9 महाभयं (for सभाभयम्). —[c]) D7 T G1–3. 6 M1. 5–7 सद्ध(D7 M1. 6 स ध)र्म- (for धर्म-). —[d]) T2 यो हि; G1 नो; G3. 6 योपि; M5 सद्यो; M6 सद्यो हि; M7 ज्ञेयो (for यो). K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G1–3. 6 M1. 5–7 धुरंधरो नर:; Bom. ed. धुरंधर: पुमान् (by transp.).

19 [a]) D7 T1 G1–3. 6 प्रज्ञाय; T2 प्राज्ञस्य: (for °स्य). K1 दुरंश्रयानि; Da4 दुरत्वयानि; Ds1 °न्वयाणि; D5. 7 T1 G1–3. 6 °त्ययानि (for °न्वयानि). —[b]) M7 नैव (for न वै). Ś1 K1. 2. 4 मुंचति (for मुह्यति). —[c]) Bo स्थाने (for स्थानाच्). Da4 च्युतस्य (for °श्चेन्). B7 corrupt; B8 (marg. as in text) तेन; D7 T1 G1–3. 6 च न (for चेन्न). Da4 गौतमे; D5 चोत्तमस्; Ca. np. 8 गौ° (as in text). —[d]) Ś1 K2. 4 T2 तदा; K7 D4. 9 तां तां; D7 T1 G1–3. 6 M5 तथा (for तावत्). ❀ Cn: गौतम इति पाठे, अहल्याजारस्य इन्द्रस्य त्रपाजननार्थं मर्मोद्घाटनम्। गौतमस्य च दारापहारेऽपि धैर्यवर्णनम् । ❀

20 [a]) D7 G1–3. 6 न शौर्येण न वीर्येण. —[b]) V1 Bo. 6. 7. 8 (orig.). 9 Da3. a4 Dn1. n4 Ds D2. 3. 8 च (for वा). B8 (marg.) पौरुषेणौषधेन च. — After 20[ab], K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8. 9 Kumbh. ed. ins.:

650* न शीलेन न वृत्तेन तथा नैवार्थसंपदा ।

—[c]) K6 अवश्यं (for अलभ्यं). —[d]) Ś1 (*sup. lin.* as in text) B7. 8 D4. 7. 9 परिवेदना (for °देवना).

21 G1 om. 21–22. —[a]) K1 ये देवम् (for यदेवम्). K7 V1 Bo. 6–9 Da3. a4 D4–7. 9 T2 G2. 3. 6 M1. 5–7 यदेव मम जा(K7 D6 °वं मम जा-; B7 °व मम य-; D5 °वमथ जा)तस्य; T1 यथैवं मम जा°. —[b]) M1. 6 फलं (for पुरा). Ś1 K1. 2. 4 धाता वै मे व्यधात्पुरा. ❀ Cs: धातार इति बहुवचनं पूजायाम् । ❀ —[c]) B7 partly damaged. K6 V1 Bo. 6. 8 (marg. as in text). 9 Da3. a4 Dn1. n4 Ds D2. 3. 8 -चरिष्यामि (for -भवि°). —[d]) D6 किं मे मृत्युं; D7 T1 G2. 3. 6 मृत्यु: किं नु; T2 किं मे मन्यु: (for किं मे मृत्यु:).

22 G1 om. 22 (cf. v. l. 21). —[a]) Da4 लब्धवान्ते च (sic); T2 °व्यानेव. —[b]) Ś1 K1 गंतव्यानीव; Da4 Ds1 °व्यानेव (for °व्यान्येव). —[c]) Ś1 K1 प्राप्तव्यानीव; K6 Da4 °व्यानेव (for °व्यान्येव). K4. 6 V1 Bo. 8. 9 Da3. a4 Dn1. n4 D2. 3. 5. 6. 8 चाप्नोति (for प्रा°). D7 T1 G2. 3. 6 प्राप्तव्यं च (T1 °तं चैव) प्रापयते; T2 M1. 6. 7 °व्यानि प्रापयते; M5 प्राप्यान्येव प्रापयते. —[d])

C. 12. 8210
B. 12. 226. 23
K. 12. 233. 24

एतद्विदित्वा कार्त्स्न्येन यो न मुह्यति मानवः । कुशलः सुखदुःखेषु स वै सर्वधनेश्वरः ॥ २३

इति श्रीमहाभारते शान्तिपर्वणि एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥

# २२०

युधिष्ठिर उवाच ।

मग्नस्य व्यसने कृच्छ्रे किं श्रेयः पुरुषस्य हि ।
बन्धुनाशे महीपाल राज्यनाशेऽपि वा पुनः ॥ १
त्वं हि नः परमो वक्ता लोकेऽस्मिन्भरतर्षभ ।
एतद्भवन्तं पृच्छामि तन्मे वक्तुमिहार्हसि ॥ २

भीष्म उवाच ।

पुत्रदारैः सुखैश्चैव वियुक्तस्य धनेन च ।
मग्नस्य व्यसने कृच्छ्रे धृतिः श्रेयस्करी नृप ॥ ३
धैर्येण युक्तस्य सतः शरीरं न विशीर्यते ।
आरोग्याच्च शरीरस्य स पुनर्विन्दते श्रियम् ॥ ४

Ś1 K1.2 सुखानि च दुःखानि च.

23 c) K6 V1 Bo.8 Da3 Dn1.n4 D8 D2.3.6.8 कुशली (for °लः). K6.7 B6.7.9 Da3.a4 Dn1.n4 D8 D2.3.5–8 सर्व- (for सुख-). — d) K1 Ds1 सर्वैः (for स वै). K1 सर्वं; K2 D4 सर्वे; K6 D8 D5.6 धर्म- (for सर्व-). K4.6 Bo Dn1.n4 D8 D2.3.5.8 -धनो नरः; K7 V1 B6–9 Da3.a4 D4.6.7.9 G1–3.6 M1.6.7 -धनी नरः; T1 -धनीश्वरः; T2 M5 -सुखी नरः (for -धनेश्वरः).

Colophon. — *Sub-parvan :* Ś1 K1.2.4.6.7 V1 Bo.6–9 Da3.a4 Dn1.n4 D8 D2–9 T G1–3.6 M1.5–7 मोक्षधर्म. — *Adhy. name :* Ś1 K1.2.4.6.7 V1 Bo.6–9 Da3.a4 Dn1 D8 D2–6.8.9 G6 M5 शक्रनमुचिसंवादः; M1.6.7 शक्रनमुचिसंवादे मोहननिंदा. — *Adhy. no.* (figures, words or both): B7 Dn1 D7 T1 G1.3.6 M5 53; Dn4 52; Ds1 54; D8 48; T2 G2 67; M1.6.7 51. — *Śloka no.:* Dn1.n4 23; D8 25.

## 220

1 The ref. is damaged in B7. — b) V1 D7 T G1–3.6 M1.6.7 ह (for हि). — B8 Da3.a4 repeat 1cd after 3ab. — c) K7 महाबाहो; B6.7.9 Da3.a4 (last two both times) महाभाग (for महीपाल). — d) Ds1 -नाशो (for -नाशे). Dn4 [s]थ (for ऽपि).

2 b) K2 कुले (for लोके). Ś1 K2.3.4 D4.9 पुरुषर्षभ (for भरत°). Da4 लोकेषु भरतर्षभः. — c) M1.6 एतं (for एतद्). — d) K1 M6.7 त्वं (K1 तं) मे; B1 त्वं तद् (for तन्मे). K6 Bo.8 (marg.) Dn1.n4 D8 D2.3.5.7.8 T1 G1–3.6 तन्मे त्वं वक्तुमर्हसि; Bo.9 Da3.a4 तद्वक्तुं त्वमिहा°.

3 a) K2 पुत्रैर् (for पुत्र-). T2 सुतैश् (for सुखैश्). — b) B8 (marg. as in text) Da3.a4 विमुक्तस्य (Da4 °श्च); M1.6 वियुक्तश्च (for °क्तस्य). K7 V1 Bo.7 Dn1.n4 D8 D2.3.8 वा (for च). — After 3ab, B8 Da3.a4 repeat 1cd. — c) B7 damaged from मग्नस्य up to शरीरं (in 4b). B8 (marg.) घोरे (for कृच्छ्रे). — d) D5 भवेत् (for नृप). ❁ Ca: धृतिर्विवेकज्ञानम्। ❁

4 B7 is damaged up to शरीरं. — a) Bo.6.9 Da3.a4 सदा; D6 ततः (for सतः). K6 B8 Dn1.n4 D8 D2.3.5.8 धैर्येण युक्तं सततं. — b) K6 न विपर्यये; V1 नाविशीर्यते; B6 नाशु° (for न वि°). — K6 Bo.6.9 Da3.a4 Dn1.n4 D8 D2.3.5.8 Kumbh. ed. ins. after 4ab: B7.8 after 652*:

651* विशोकता सुखं धत्ते धत्ते चारोग्यमुत्तमम् ।

[ Da3 lacuna; Da4 मम (for the second धत्ते).]

— B7.8, on the other hand, ins. after 4ab:

652* वश्या भवन्ति धैर्येण न वा राज्ञो न संशयः ।
धैर्यवाञ्श्रियमाप्नोति धैर्याद्धर्मो विवर्धते ।

— After the above, B7.8 ins. 651*. — c) K1.4 D4 आरोग्याश्च; K7 D9 °ग्यश्च; D7 T G1–3.6 M1.5–7 °ग्यात्तु (for °ग्याच्च). K7 D9 शरीरेण (for °रस्य). — d) D7 T1 G1 विद्यते (for विन्दते). Ds2 (by corr. as in text) पुनर्विंदति मे श्रियं.

5 a) K1 Bo.9 D6 नरस् (for नरास्). K4.6.7 Da3 Dn1.n4 D8 D2–5.7–9 T G1–3.6 M1.7 यश्च प्राज्ञो नरस्तात. — b) K1 Bo Ds2 सात्त्विकी; D2 सात्त्विकां; D8 सात्त्विको (for सात्त्विकीं). K6.7 Dn1.n4 D8 D2.3.5.7–9 T G1–3.6 M1.7 आस्थितः; V1 B6–9 D4.6 आश्रिताः

यस्य राज्ञो नरास्तात सात्त्विकीं वृत्तिमाश्रिताः ।
तस्य स्थैर्यं च धैर्यं च व्यवसायश्च कर्मसु ॥ ५
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
बलिवासवसंवादं पुनरेव युधिष्ठिर ॥ ६
वृत्ते देवासुरे युद्धे दैत्यदानवसंक्षये ।
विष्णुक्रान्तेषु लोकेषु देवराजे शतक्रतौ ॥ ७
इज्यमानेषु देवेषु चातुर्वर्ण्ये व्यवस्थिते ।
समृध्यमाने त्रैलोक्ये प्रीतियुक्ते स्वयंभुवि ॥ ८
रुद्रैर्वसुभिरादित्यैरश्विभ्यामपि चर्षिभिः ।
गन्धर्वैर्भुजगेन्द्रैश्च सिद्धैश्चान्यैर्वृतः प्रभुः ॥ ९
चतुर्दन्तं सुदान्तं च वारणेन्द्रं श्रिया वृतम् ।
आरुह्यैरावतं शक्रस्त्रैलोक्यमनुसंययौ ॥ १०
स कदाचित्समुद्रान्ते कस्मिंश्चिद्गिरिगह्वरे ।
बलिं वैरोचनिं वज्री ददर्शोपससर्प च ॥ ११
तमैरावतमूर्धस्थं प्रेक्ष्य देवगणैर्वृतम् ।
सुरेन्द्रमिन्द्रं दैत्येन्द्रो न शुशोच न विव्यथे ॥ १२
दृष्ट्वा तमविकारस्थं तिष्ठन्तं निर्भयं बलिम् ।
अधिरूढो द्विपश्रेष्ठमित्युवाच शतक्रतुः ॥ १३
दैत्य न व्यथसे शौर्यादथ वा वृद्धसेवया ।
तपसा भावितत्वाद्वा सर्वथैतत्सुदुष्करम् ॥ १४
शत्रुभिर्वशमानीतो हीनः स्थानादनुत्तमात् ।
वैरोचने किमाश्रित्य शोचितव्ये न शोचसि ॥ १५
श्रैष्ठ्यं प्राप्य स्वजातीनां भुक्त्वा भोगाननुत्तमान् ।
हृतस्वबलराज्यस्त्वं ब्रूहि कस्मान्न शोचसि ॥ १६

C. 12. 8218
B. 12. 227. 16
K. 12. 234. 16

---

(for आश्रिताः). — c) M1. 6 तत्र (for तस्य). K6 V1 Bo. 6 (marg. as in text). 7–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 [ऐ]श्वर्यं (for स्थैर्यं). B7 damaged; B8 (marg.) धर्मं; Da4 दार्यं (sic) (for धैर्यं). — d) T2 G1 व्यवसायं (for °सायश्च). ❀ Cs: व्यवसायो निर्णयः । ❀

6 a) G2 अत्रापि (for अत्रैव). — c) Ś1 K1 (by corr. as in text) वडि- (for बलि-). T2 बलेः शक्रस्य संवादं.

7 a) K7 वृत्रे (for वृत्ते). M5 दैवासुरे. — d) K1 देवराज- (for °राजे).

8 a) Da3 D1. 9 ईज्यमानेषु (for इज्य°). — b) Da4 Ds2 M1. 6 चातुर्वर्णे (for °वर्ण्ये). — Dn1 om. 8c–9d. — c) Ś1 K2. 4. 6 Bo. 6 Da4 G2 समृद्धमाने; Da3 Dn4 °द्धमात्रे; D5 संवृद्धमाने (for समृध्य°). — d) T2 स्वयंभुवे; G1 °भुवः (for °भुवि).

9 Dn1 om. 9 (cf. v. l. 8). — b) K6 V1 Bo. 7. 8 (marg. as in text) Ds D2. 3. 8 च सुरर्षिभिः; G2 इव च° (for अपि च°). — c) B8 (marg. as in text) भुजगैश्चान्यैः; Dn4 भुजगेंद्रेण; D7 T G1–3. 6 M1. 5–7 °गैः सिद्धैर् (for °गेन्द्रैश्च). — d) D7 T G1–3. 6 M1. 5–7 दिव्यैश् (for सिद्धैश्).

10 a) Ś1 K1. 2. 4 च दांतं (for सुदान्तं). — c) Some MSS. [ऐ]रावणं.

11 c) Ś1 बडिं; Da4 बलि- (for बलिं). B9 Dn1 T2 वैरोचनं. — d) D7 G1. 2 [अ]पससर्प (for [उ]पस°).

12 a) Some MSS. ऐरावण-. D7 T1 G1–3. 6 M1. 5–7 -मूर्ध्निस्थं (for -मूर्धस्थं). — b) Ds1 प्रेत्य (for प्रेक्ष्य). — c) D7 T G1–3. 6 अपि (for इन्द्रं).

13 a) Da4 अविकारेस्थं (for °रस्थं). — b) Ś1 बडिं. — c) B6. 9 Da3. a4 अभिरुह्य; Dn4 अभिरूढो (for अधि°). — d) V1 पुरंदरः (for शतक्रतुः).

14 a) K2. 4 विव्यथे; Da4 च्यवसे; G1 व्यथते (for °से). B8 (marg. as in text) D5 धैर्याद्; Da4 सूर्याद् (for शौर्याद्). — c) Dn4 भावितत्वाय; G2 °ताद्वापि (for °तत्वाद्वा). T1 च (for वा). — d) K7 D4. 9 सर्वमेतत् (for सर्वथैतत्).

15 b) D5 महा- (for हीनः). — c) K1 वैरोचन. — d) Da4 शोचितत्वे; D8 °तव्यं; D7 T2 G3 °तव्यो (for °तव्ये).

16 a) K1. 4 श्रेष्ठं; D2 श्रेष्ठ्यं; D4 श्रेष्ठ्ये (for श्रैष्ठ्यं). — b) K6 Bo. 8 (marg.) Dn1. n4 Ds D2. 3. 8 महा-; V1 मुक्त्वा (for भुक्त्वा). — c) K6 Dn1. n4 Ds D2. 3. 8. 9 -रत्न- (for -बल-). D4 -राज्यं (for -राज्यस्). Ś1 K2 स; K1 सन्; B6 (marg.) D2 च; D4 स्वं (for त्वं). B6 (marg. as in text). 7. 9 Da3. a4 कृ(B6. 9 हृ)तं च स्वं (Da4 स्व-) बले राज्यं; G1. 2 हृतस्वश्चल-राज्यस्त्वं.

17 B9 D5 G1 M1 om. (hapl.) 17–18. K1 transp.

C. 12. 8228
B. 12. 227. 17
K. 12. 234. 17

ईश्वरो हि पुरा भूत्वा पितृपैतामहे पदे ।
तत्त्वमद्य हृतं दृष्ट्वा सपत्नैः किं न शोचसि ॥ १७
बद्धश्च वारुणैः पाशैर्वज्रेण च समाहतः ।
हृतदारो हृतधनो ब्रूहि कस्मान्न शोचसि ॥ १८
भ्रष्टश्रीर्विभवभ्रष्टो यन्न शोचसि दुष्करम् ।
त्रैलोक्यराज्यनाशे हि कोऽन्यो जीवितुमुत्सहेत् ॥ १९
एतच्चान्यच्च परुषं ब्रुवन्तं परिभूय तम् ।
श्रुत्वा सुखमसंभ्रान्तो बलिर्वैरोचनोऽब्रवीत् ॥ २०
निगृहीते मयि भृशं शक्र किं कत्थितेन ते ।
वज्रमुद्यम्य तिष्ठन्तं पश्यामि त्वां पुरंदर ॥ २१
अशक्तः पूर्वमासीस्त्वं कथंचिच्छक्ततां गतः ।
कस्त्वदन्य इमा वाचः सुक्रूरा वक्तुमर्हति ॥ २२
यस्तु शत्रोर्वशस्थस्य शक्तोऽपि कुरुते दयाम् ।
हस्तप्राप्तस्य वीरस्य तं चैव पुरुषं विदुः ॥ २३
अनिश्चयो हि युद्धेषु द्वयोर्विवदमानयोः ।
एकः प्राप्नोति विजयमेकश्चैव पराभवम् ॥ २४
मा च ते भूत्स्वभावोऽयं मया दैवतपुंगव ।
ईश्वरः सर्वभूतानां विक्रमेण जितो बलात् ॥ २५
नैतदस्मत्कृतं शक्र नैतच्छक्र त्वया कृतम् ।
यत्त्वमेवंगतो वज्रिन्यद्वाप्येवंगता वयम् ॥ २६

---

17 and 18. —c) D6 तं; G2 न (for तत्). D6 अत्यद्भुतं (for अद्य हृतं). —d) Bom. ed. नु (for न).

18 B9 D5 G1 M1 om. 18 (cf. v. l. 17). Ś1 K2. 4 om. (hapl.) 18. K1 transp. 17 and 18. V1 reads 18 on marg. —a) K6 B8 (marg.) D8 बद्धैव (for बद्धश्च). —b) G3 समाहृतः. ❀ Ca (reading रुद्रेण for वज्रेण): च शब्द इवार्थे । तेन निर्जीव इवेत्यर्थः ॥ ❀ —c) D4 धृतधनो (for हृत°). Ds1 D3 हतदारो हतधनो.

19 a) K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds1 D2. 3. 5 (marg.). 8 नष्टश्रीर् (for भ्रष्ट°). Dn4 -श्रेष्ठो (for -भ्रष्टो). —b) Da4 यत्र (for यन्न). Ds2 दुस्वरं (for दुष्करम्). —c) K7 Da4 G1 -नाशो (for -नाशे). D5 [ऽ]पि (for हि). —d) K1. 2 Bo D7 M7 उत्सहे; Da4 उत्सृजेत् (for उत्सहेत्).

20 Before 20, Ś1 K1. 2. 4 T2 ins. भीष्मः. —a) K1 Da4 [अ]न्यं (for [अ]न्यच्). K1 (by corr. as in text) B9 Da4 Dn4 Ds2 D3. 6. 9 (by corr. as in text) G1 M1. 6 पुरुषं (for परुषं). —b) K1 परिभूरि तं; Da4 °ब्रूयतां (for °भूय तम्). —d) Ś1 ब्रडिर्. K4 बलिर्वैरोचनं भवेत् (sic).

21 Before 21, K6. 7 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 T G3. 6 ins. बलिः. —a) G1 भ्रंशं (for भृशं). —b) Ś1 K2. 4 B6. 9 Ds1 D8 M1. 7 कथितेन; K1 कथ तेन (sic); D6 T G2 कत्थनेन; D7 G1. 3. 6 कथनेन (for कत्थितेन). D7 T1 G2 च (for ते). —d) T1 G3. 6 M1 त्वा (for त्वां).

22 b) D4. 9 M5 शक्तत्तां; D7 G1–3. 6 शक्तितां (for शक्ततां). —c) Ś1 K1. 2. 4 त्वदन्या (for त्वदन्य). K4. 6. 7 Bo. 6. 7. 8 (marg.). 9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 7. 8 T1 G1–3. 6 M1. 5. 6 इमां वाचं (for इमा वाचः). —d) K4. 6. 7 Bo. 6. 7. 8 (marg.). 9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 M1. 5. 6 सुक्रूरां; D7 T1 G1–3. 6 सुस्थिरो; T2 संक्रूरा (for सु°). Da4 Dn4 T2 अर्हसि.

23 a) Ś1 K1. 2. 4 यस्य शत्रुर् (K1 also °क्र; K4 °त्रु-) (for यस्तु शत्रोर्). K7 वधस्थस्य; B6 (marg. as in text) वशस्तस्य; D7 T1 G1–3. 6 वधं कर्तुं (for वशस्थस्य). —b) M6 विकुरुते (for ऽपि कु°). —c) D5 हस्तं (for हस्त-). K6 Ds1 D3 -प्राप्यस्य (for -प्राप्तस्य). B6. 9 Da3. a4 नीचस्य; M6 धीरस्य (for वीरस्य). —d) D4. 6. 7. 9 T G1–3. 6 M1. 5–7 तमेव (for तं चैव). B6 (marg. as in text). 9 D5 सुकरं; G1 परुषं (for पुरुषं).

24 a) Da3. a4 अनिश्चये. M1 [ऽ]पि (for हि).

25 b) K6 V1 B6–9 Da3. a4 Dn1. n4 D2. 3. 5. 8 इति; Bo अति- (for मया). Bom. ed. ते देव- (for दैवत-). K7 D4. 9 मया दानवपुंगवः; D7 T G1–3. 6 M1. 5–7 मयि दानवपुंगवे (G2 °वः). —c) D7 T G1–3. 6 ईश्वरे. —d) D7 T1 G1. 3. 6 जिते बलात्; T2 जितेच्छया (for जितो बलात्).

26 a) D6 न तद् (for नैतद्). Ds1 असत्करं; M1 °त्कृतः (for °त्कृतं). Ds M5 कर्म (for शक्र). —b) D7 T1 G1–3. 6 कृच्छ्रं (for शक्र). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 कृतं त्वया (by transp.). —c) K6. 7 Bo. 6 (marg. as in text). 7. 8 (marg.). 9 Dn1. n4 Ds D4–6. 9 T2 M7 यस् (for यत्). Da4 कृतो (for

अहमासं यथाद्य त्वं भविता त्वं यथा वयम् ।
मावमंस्था मया कर्म दुष्कृतं कृतमित्युत ॥ २७
सुखदुःखे हि पुरुषः पर्यायेणाधिगच्छति ।
पर्यायेणासि शक्रत्वं प्राप्तः शक्र न कर्मणा ॥ २८
कालः काले नयति मां त्वां च कालो नयत्ययम् ।
तेनाहं त्वं यथा नाद्य त्वं चापि न यथा वयम् ॥ २९
न मातृपितृशुश्रूषा न च दैवतपूजनम् ।
नान्यो गुणसमाचारः पुरुषस्य सुखावहः ॥ ३०
न विद्या न तपो दानं न मित्राणि न बान्धवाः ।
शक्नुवन्ति परित्रातुं नरं कालेन पीडितम् ॥ ३१
नागामिनमनर्थं हि प्रतिघातशतैरपि ।
शक्नुवन्ति प्रतिव्योढुमृते बुद्धिबलान्नराः ॥ ३२
पर्यायैर्हन्यमानानां परित्राता न विद्यते ।
इदं तु दुःखं यच्छक्र कर्ताहमिति मन्यते ॥ ३३
यदि कर्ता भवेत्कर्ता न क्रियेत कदाचन ।
यस्मात्तु क्रियते कर्ता तस्मात्कर्ताप्यनीश्वरः ॥ ३४
कालेन त्वाहमजयं कालेनाहं जितस्त्वया ।
गन्ता गतिमतां कालः कालः कलयति प्रजाः ॥ ३५

C. 12. 8247
B. 12. 227. 35
K. 12. 234. 35

---

-गतो). $D_{a4}$ वज्री (for वज्रिन्). —$^{d}$) $G_{2}$ एव हता (for एवंगता).

27 $^{b}$) Bo तथा (for यथा). $B_{6}$ (marg. as in text) ह्यहं (for वयम्). $B_{9}$ भविता त्वं च वासव. —$^{c}$) $D_{4}$ om. from स्था मया up to पर्यायेणासि (in $28^{e}$). $D_{8}$ $G_{1}$ यथा (for मया). $G_{2}$ मावमास्था यथाकामं. —$^{d}$) $K_{6.7}$ $V_{1}$ $B_{0.6.8}$ $D_{s2}$ $D_{3.5.6}$ $T_{2}$ $G_{1.2}$ $M_{1.5-7}$ दुष्करं; $B_{7}$ damaged (for दुष्कृतं).

28 $D_{4}$ om. up to पर्यायेणासि (cf. v. l. 27). —$^{a}$) Ś$_{1}$ $K_{1.2.4}$ -दुःखौ हि; $T_{2}$ -दुःखेषु (for -दुःखे हि). —$^{c}$) $D_{8}$ $D_{3.5}$ $T_{1}$ $G_{2.3}$ शक्रस्त्वं (for शक्रत्वं). — $K_{7}$ om. $28^{d}$–$29^{c}$.

29 $K_{7}$ om. $29^{abc}$ (cf. v. l. 28). —$^{ab}$) $M_{5}$ कालान्; Ca काले (as in text: glossed as विनाशकाले). $D_{7}$ T $G_{1-3.6}$ $M_{1.6.7}$ कालो नयति मां त्वां ($G_{2}$ त्वं) च कालं. Ś$_{1}$ $K_{2}$ काले (for कालो). $B_{7}$ (marg. as in text) अपि; $T_{2}$ अधः; $G_{2}$ अमुं (for अयम्). —$^{c}$) $D_{5}$ तेन हि (for तेनाहं). $B_{8}$ (marg. as in text) तेनाद्य त्वं यथा नाहं; $D_{7}$ T $G_{1-3.6}$ $M_{1.5-7}$ तेनाहं च ($M_{5}$ न; $M_{7}$ त्वं) यथाद्य त्वं. —$^{d}$) $K_{6}$ त्वं वापि न; $K_{7}$ भविता त्वं; $D_{a4}$ त्वं न वापि; $D_{7}$ $T_{1}$ $G_{1-3.6}$ त्वं च वीर; $T_{2}$ तत्त्वं चापि (for त्वं चापि न). $D_{5}$ तथा (for यथा).

30 $^{c}$) $B_{9}$ मान्यो (for नान्यो). $M_{1.6}$ -समाहारः (for °चारः).

31 $^{b}$) $M_{1.5.6}$ मित्राणि न च बांधवाः. —$^{c}$) $B_{7}$ शक्नुवंते; $D_{a4}$ न शक्नुवंति (for शक्नु°). — $G_{2}$ reads $31^{d}$–$32^{e}$ twice. —$^{d}$) $K_{6}$ Bo नरः; $D_{8}$ नराः (for नरं). $B_{8}$ (marg. as in text) कालप्रपीडितं; $T_{2}$ कालेपपी° (for कालेन पी°).

32 For the repetition in $G_{2}$, cf. v. l. 31. —$^{a}$) $K_{2}$ Bo न गामिनम्; $D_{s2}$ (by corr. as in text) अगा°; $D_{5}$ न यामितम् (for नागामिनम्). —$^{c}$) $B_{7}$ शक्नुवंते (for °वन्ति). Ś$_{1}$ $K_{1.2.4}$ प्रतिव्यूढम्; $K_{7}$ $D_{a4}$ प्रतिवोढुम्; $B_{6}$ $G_{3.6}$ परिव्योढुम्; $B_{6}$ (marg.) परिव्यूढम्; $B_{7}$ परिप्राप्तुम्; $B_{8}$ (marg. as in text) परित्यक्तुम्; $T_{2}$ प्रतिच्छेत्तुम्; $G_{2}$ (both times) परित्रातुम् (for प्रतिव्योढुम्). ❀ Ca : प्रतिव्योढुमिति वोढुमिति वा छान्दसं प्रतिव्यूहितमित्यर्थः। ❀ —$^{d}$) $K_{6}$ बुद्धिवतां; $K_{7}$ $V_{1}$ $B_{0.6.8.9}$ $D_{a3.a4}$ $D_{n4}$ $D_{4-6.9}$ $M_{5}$ °बलं (for °बलान्). $K_{7}$ $D_{4.5.9}$ नरं; $T_{2}$ $M_{7}$ नरः (for नराः). $D_{3}$ नरं कालेन पीडितं (= $31^{d}$).

33 $^{a}$) $K_{7}$ $V_{1}$ $B_{6.7.8}$ (marg. as in text)$_{.9}$ $D_{a4}$ $D_{4.6.9}$ $M_{1.6}$ वध्यमानानां (for हन्य°). —$^{b}$) Ś$_{1}$ $K_{1}$ (by corr. as in text) विद्यति. —$^{c}$) $K_{7}$ दुःखं तु (by transp.); $D_{7}$ $T_{1}$ $G_{1-3.6}$ हि दुःखं. Ś$_{1}$ $K_{1.2.4}$ शत्रुः (for शक्र). —$^{d}$) $K_{7}$ $V_{1}$ $B_{0.6-9}$ $D_{a3.a4}$ $D_{n4}$ $D_{s2}$ $D_{2-6.8.9}$ $M_{7}$ मन्यसे.

34 $^{a}$) $K_{7}$ $D_{4.9}$ न हि (for यदि). $M_{1}$ (*inf. lin.* as in text)$_{.7}$ भर्ता (for the first कर्ता). $D_{7}$ T $G_{1-3.6}$ यदि स्यात्पुरुषः कर्ता. —$^{b}$) $D_{a4}$ क्रियते; Cs क्रियेत (as in text: gloss विक्रियेत). —$^{c}$) $D_{7}$ $G_{1.2}$ तस्मात् (for कर्ता). ❀ Ca : क्रियते, ईश्वरेण कर्मणि प्रेर्यते। ❀ —$^{d}$) $D_{7}$ सर्व-; $G_{1}$ चर-; $G_{2}$ न च (for तस्मात्). $D_{a3.a4}$ ह्यनीश्वरः; $D_{n4}$ [अ]प्यनिश्चयः; $D_{7}$ T $G_{1-3.6}$ $M_{5.7}$ न हीश्वरः (for [अ]प्यनी°).

35 $^{a}$) Bom. ed. [अ]हं त्वाम् (for त्वाहम्). —$^{c}$) $B_{9}$ $D_{8}$ $G_{2}$ मतिमतां (for गति°). $B_{8}$ (marg. as in text) नित्यं (for कालः). ❀ Ca. v : गन्ता गमयिता। ❀

C. 12. 8248
B. 12. 227. 36
K. 12. 234. 36

इन्द्र प्राकृतया बुद्ध्या प्रलपन्नावबुध्यसे ।
केचित्त्वां बहु मन्यन्ते श्रैष्ठ्यं प्राप्तं स्वकर्मणा ॥ ३६
कथमस्मद्विधो नाम जानल्ँलोकप्रवृत्तयः ।
कालेनाभ्याहतः शोचेन्मुह्येद्वाप्यर्थसंभ्रमे ॥ ३७
नित्यं कालपरीतस्य मम वा मद्विधस्य वा ।
बुद्धिर्व्यसनमासाद्य भिन्ना नौरिव सीदति ॥ ३८
अहं च त्वं च ये चान्ये भविष्यन्ति सुराधिपाः ।
ते सर्वे शक्र यास्यन्ति मार्गमिन्द्रशतैर्गतम् ॥ ३९
त्वामप्येवं सुदुर्धर्षं ज्वलन्तं परया श्रिया ।
काले परिणते कालः कालयिष्यति मामिव ॥ ४०
बहूनीन्द्रसहस्राणि दैतेयानां युगे युगे ।
अभ्यतीतानि कालेन कालो हि दुरतिक्रमः ॥ ४१
इदं तु लब्ध्वा त्वं स्थानमात्मानं बहु मन्यसे ।
सर्वभूतभवं देवं ब्रह्माणमिव शाश्वतम् ॥ ४२
न चेदमचलं स्थानमनन्तं वापि कस्यचित् ।
त्वं तु बालिशया बुद्ध्या ममेदमिति मन्यसे ॥ ४३
अविश्वास्ये विश्वसिषि मन्यसे चाध्रुवं ध्रुवम् ।
ममेयमिति मोहात्त्वं राजश्रियमभीप्ससि ॥ ४४

---

— d) Da3. a4 D7 T G1. 3. 6 M1. 5–7 कालयति ( for कल° ).

36 Ds1 om. 36. — b) K6 V1 Bo. 6. 7. 8 ( marg. as in text ). 9 Da3. a4 Dn4 Ds2 D2. 3. 5. 6. 8 M1. 6 प्रलयं; Dn1 प्रलापं; G1 प्रलापन् ( for प्रल° ). Ś1 K1. 2. 4 न च; K7 D4. 6. 9 नानु- ( for नाव- ). — c) Ś1 K1. 2. 4 यदि; D8 कच्चित् ( for केचित् ). Ś1 K1. 2 M1 त्वा ( for त्वां ). — d) K7 V1 B6. 7. 8 ( marg. as in text ). 9 D4–6. 9 यदृच्छया ( for स्वकर्मणा ).

37 a) D7 T1 G1–3. 6 त्वसद्विधो ( for अस्म° ). B9 लोको ( for नाम ). — b) K1 जाने ( for जानल्ँ ). D5 -प्रवर्तनं; D7 T1 G1–3. 6 -प्रवृत्तिजान् ( for °त्तयः ). Da4 जानंतोमकवृत्तयः ( sic ). ❀ Ca : लोकप्रवृत्तय इति विभक्तिव्यत्ययश्छान्दसः । ❀ — c) B6 ( marg. as in text ) [अ]भ्यागतः ( for °हतः ). K1. 7 शोचे; Da4 Dn4 शोचन्; D6 शौचेन् ( for शोचेन् ). — d) Ś1 K2. 4 -विभ्रमे ( for -संभ्रमे ). K6 V1 Bo. 6. 7. 8 ( marg. as in text ). 9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 मुह्येद्वाप्यथ विभ्रमेत्.

38 a) K7 कले; D7. 9 T G1–3. 6 M5. 7 कथं ( for नित्यं ). Da4 D2. 3 -परितस्य ( for -परी° ). — b) G3 त्वद्विधस्य ( for मद्वि° ). Da3 च ( for वा ). — c) Ś1 ( *sup. lin.* as in text ) K2 विस्मयम् ( for व्यसनम् ). — d) K7 भित्त्वा; M1 छिन्ना ( for भिन्ना ). D2 अव- ( for इव ).

39 b) B8 ( marg. as in text ) करिष्यंति ( for भवि° ). K7 D4. 9 सुराधिप ( for °धिपाः ). — c) M5 सर्वे ते ( by transp. ). M1. 6. 7 शक्र सर्वे ( by transp. ). B8 ( marg. as in text ) संयांति ( for यास्यन्ति ). — d) K4 गतिं; M1. 6 वृतं ( for गतम् ).

40 a) Ś1 K2 सुदुर्दर्शं ( for °र्धर्षं ). — c) D5. 6 कालः ( for काले ). B3 परिणतः. D6. 9 ( by corr. as in text ) काले ( for कालः ). — d) B7. 9 Da4 Ds2 ( before corr. as in text ) D3. 7 G3. 6 कलयिष्यति.

41 a) Da4 D6 बहूनिंद्र- ( for °नीन्द्र- ). — b) K4 B6 ( marg. ) D6 दैत्येयानां; K6 Bo. 8 Dn1. n4 Ds D2. 3. 8 दैवतानां ( for दैतेयानां ). — c) B8 ( marg. ) Da3 अत्यतीतानि; Da4 D4 अन्य°; D7 अभ्यतीता हि ( for °तीतानि ).

42 a) T2 इमं ( for इदं ). Ś1 K1. 2. 4 स्थानं त्वम् ( by transp. ); K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 संस्थानम्; M1. 6 स्वत्स्थानम्. — b) Da4 मन्यते. — c) K2 दैवं ( for देवं ). — d) K6 ब्रह्माणममितौजसं.

43 a) K7 G3. 6 वेदम् ( for चेदम् ). K1 Da4 G3. 6 अचल- ( for अचलं ). — b) Ś1 K1. 2 अपि; V1 चापि ( for वापि ).

44 a) Ś1 K1. 2 G1 अविश्वासे; K4 °द्वांसे; K6 V1 Bo. 6–9 Da3 Dn1. n4 Ds D2. 3. 5. 8 °श्वस्ते; Da4 अनिश्वसे ( sic ); D7 अविश्वस्ये ( for °श्वास्ये ). Bo विश्वसिति; M1. 5. 6 °ससि ( for °सिषि ). — b) K4 V1 Bo. 6. 8. 9 D2–4. 6. 7 T G1–3. 6 चाध्रुवे; K6 वाध्रुवं; K7 B7 Da3. a4 Dn1. n4 Ds D5. 8 वाध्रुवे ( for चाध्रुवं ). — After 44ab, Ś1 K1. 2. 4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 M5 Kumbh. ed. ins. :

653* नित्यं कालपरीतात्मा भवत्येवं सुरेश्वर ।

[ B7 Da4 -परितात्मा ( for -परी° ). M5 भवस्येव ( for °त्येवं ). ]

— c) B8 ( marg. as in text ) ममेदम् ( for °यम् ).

नेयं तव न चास्माकं न चान्येषां स्थिरा मता ।
अतिक्रम्य बहूनन्यांस्त्वयि तावदियं स्थिता ॥ ४५
कंचित्कालमियं स्थित्वा त्वयि वासव चञ्चला ।
गौर्निपानमिवोत्सृज्य पुनरन्यं गमिष्यति ॥ ४६
राजलोका ह्यतिक्रान्ता यान्न संख्यातुमुत्सहे ।
त्वत्तो बहुतराश्चान्ये भविष्यन्ति पुरंदर ॥ ४७
सवृक्षौषधिरत्नेयं ससरित्पर्वताकरा ।
तानिदानीं न पश्यामि यैर्भुक्तेयं पुरा मही ॥ ४८
पृथुरैलो मयो भौमो नरकः शम्बरस्तथा ।
अश्वग्रीवः पुलोमा च स्वर्भानुरमितध्वजः ॥ ४९
प्रह्रादो नमुचिर्दक्षो विप्रचित्तिर्विरोचनः ।
ह्रीनिषेधः सुहोत्रश्च भूरिहा पुष्पवान्वृषः ॥ ५०
सत्येषुर्ऋषभो राहुः कपिलाश्वो विरूपकः ।
बाणः कार्तस्वरो वह्निर्विश्वदंष्ट्रोऽथ नैर्ऋतः ॥ ५१

C. 12. 8254
B. 12. 227. 52
K. 12. 234. 52

---

Da4 ममेयमितिहासत्वं (sic). —d) K6 V1 B8 (marg. as in text) D7 T G1. 3. 6 M1. 5–7 राज्य- (for राज-). D7 अवाप्स्यसि (for अभीप्ससि).

45 a) M5 च नास्माकं (for न चा°). B8 (marg. as in text) सा नेयं तत्र नास्माकं. —b) Bo. 8 (marg. as in text) M6 स्थिता (for स्थिरा). K6 Bo. 8 Dn1. n4 Ds D2. 3. 8 सदा (for मता). —Da4 (hapl.) om. $45^{cd}$. —d) D7 T1 G1. 3. 6 इह (for इयं). K6 Bo. 8 (marg.) Dn1. n4 Ds D2. 3. 8 गता (for स्थिता).

46 a) K7 V1 Da4 Dn1 D9 किंचित् (for कंचित्). K7 D6 अयं (for इयं). —c) K6 Bo. 6. 7. 8 (marg.). 9 Dn1. n4 Ds D2. 3. 6. 8 T2 M1. 5–7 गौर्निवासम्; D7 T1 G1–3. 6 जी(G1 की)र्णं वासम् (for गौर्निपानम्). —d) D4. 7 (by corr. as in text) गमिष्यसि.

47 K7 D4. 9 om. 47. —a) D5. 6 राजानो ये (for राजलोका). D7 T G1–3. 6 M5. 7 सुरेशा ये त्वति(T2 ह्यति-; M7 ह्यप)क्रांता; M1. 6 राजानो ह्यभ्यति°. —G2 repeats $47^{b}$–$54^{d}$, followed by the repetition of 12. 221. $63^{a}$–$71^{c}$, after 12. 222. 18. —b) K4 यन्; D5–7 T G2 (first time). 3. 6 M5. 7 तान्; M1 तन् (for यान्). —c) G2 (second time) तं तत्वो बहुतराश्चासन्ये (sic). —d) Ś1 K1. 4 पुरंदराः; B8 M5 सुरेश्वराः (for पुरंदर).

48 For the repetition in G2, cf. v. l. 47. —a) B9 सु- (for स-). K7 D4–6. 9 -रत्नौघा; D7 T G1. 2 (both times). 3. 6 M1. 5–7 -गुल्मेयं (for -रत्नेयं). —b) D2. 3 (before corr. as in text) -पर्वतांतरा; D8 °ताधरा (for °ताकरा). Dn1. n4 सहसत्त्व(Dn4 °त्व)वनाकरा; D7 T1 G1. 2 (first time). 3. 6 ससरिद्गिरिकानना. —c) K7 T2 M1. 5–7 तानीदानीं; D7 T1 G1. 2 (first time). 3. 6 नेदानीं तां; G2 (second time) तानि तानि (for तानिदानीं). —d) Ś1 K2 T2 (also as in text) वसुंधरा; Ś1 (*sup. lin.*) K1 G2 (second time) मही पुरा (by transp.).

49 For the repetition in G2, cf. v. l. 47. —a) Ś1 K2 पृथुरिलौं; K1 °रिलो; K7 D4. 9 पुरेल्वलो; V1 पृथुरिल्वो; D5 °वैण्यो; D6 °रील्वो; D7 T1 G1. 3. 6 °वेलो; T2 G2 (first time) M5. 7 °रिल्वलो (hypermetric); M1. 6 °ल्वलो (for °रैलो). B7. 8 Dn1 गयो (for मयो). K6 Bo. 6 (marg. as in text) Da3. a4 Dn1. n4 Ds D2. 3. 8 भीमो; M1 भौमौ (for भौमो). G2 (second time) पृथुलिल्वरो लोमयोंता (sic). ❀ C8: पृथुर्नाम कश्चिदसुरो, न वैन्यः । ❀ —b) V1 Bo. 7 संबरस्. —D5 om. $49^{c}$–$50^{b}$. —c) G2 (second time) प्रलोमा; M1 सुलोमा (for पु°). —d) D7 T G1. 2 (first time). 3. 6 M5. 7 -प्रभः (for -ध्वजः).

50 For the repetition in G2, cf. v. l 47. D5 om. $50^{ab}$ (cf v. l. 49). —a) Some MSS. प्रह्लादो. Ś1 K1. 2. 4 वृत्रो (for दक्षो). —c) K4 ह्रीनिषेदः; V1 Bo. 6 (marg. as in text). 7–9 Da3. a4 Dn1. n4 D2. 3. 5. 8 M1 Cap °षेवः; G2 (second time) श्रीनिषेधः (for ह्री°). K7 D4. 6. 7. 9 T G1. 2 (both times). 3. 6 M1. 5–7 च होत्रश्च; B8 च हेतिश्च; Da4 सहोत्रश्च (for सुहो°). —d) D5. 7 भूरिदः; T1 G3. 6 °पा; G1. 2 °पाः (for °हा). D5. 7 पुण्यवान्; M5 वृषावान् (for पुष्प°). B8 (marg. as in text) नृपः; T2 नृपु; G1. 2 (second time) ऋषिः (for वृषः).

51 For the repetition in G2, cf. v. l. 47. —a) K1. 6 Da4 D7 T G1. 3. 6 सत्येषु-; M1 शभेपुर् (for सत्ये°). Ś1 K1. 2 D5 T G1. 2 (first time) वृषभो (for ऋषभो). K4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 D2. 3. 8 बाहुः (for राहुः). —b) D5. 7 कपिलाख्यो; T1 G1. 2 (first time). 3. 6 M7 °लोश्वो; G2 (second time) कपलाकों (for कपिलाश्वो). G2 (second time) om. विरूपकः. —c) K1 कांतस्वरो; T2 G2 (first time) का(T2 क)र्ता° (for कार्त°). K7 D4. 9 बर्हिर् (for वह्निर्). —d) K1. 2. 4 नै(K1 नो)नृतः; K6 V1 Bo. 6. 8. 9 Da3. a4 Dn1. n4 Ds D2. 3. 8 नैर्ऋतिः;

C. 12. 8264
B. 12. 227. 52
K. 12. 234. 52

रित्थाहुत्थौ वीरताम्रौ वराहाश्वो रुचिः प्रभुः ।
विश्वजित्प्रतिशौरिश्च वृषाण्डो विष्करो मधुः ॥ ५२
हिरण्यकशिपुश्चैव कैटभश्चैव दानवः ।
दैत्याश्च कालखञ्जाश्च सर्वे ते नैर्ऋतैः सह ॥ ५३
एते चान्ये च बहवः पूर्वे पूर्वतराश्च ये ।
दैत्येन्द्रा दानवेन्द्राश्च यांश्चान्याननुशुश्रुम ॥ ५४
बहवः पूर्वदैत्येन्द्राः संत्यज्य पृथिवीं गताः ।
कालेनाभ्याहताः सर्वे कालो हि बलवत्तरः ॥ ५५

सर्वैः क्रतुशतैरिष्टं न त्वमेकः शतक्रतुः ।
सर्वे धर्मपराश्चासन्सर्वे सततसत्रिणः ॥ ५६
अन्तरिक्षचराः सर्वे सर्वेऽभिमुखयोधिनः ।
सर्वे संहननोपेताः सर्वे परिघबाहवः ॥ ५७
सर्वे मायाशतधराः सर्वे ते कामचारिणः ।
सर्वे समरमासाद्य न श्रूयन्ते पराजिताः ॥ ५८
सर्वे सत्यव्रतपराः सर्वे कामविहारिणः ।
सर्वे वेदव्रतपराः सर्वे चासन्बहुश्रुताः ॥ ५९

---

B7 damaged; T2 नैर्युत; G2 (first time) नैज्जतः; G2 (second time) नेत्रतः (for नैर्ऋतः).

52 For the repetition in G2, cf. v. l. 47. —[a]) K2 रित्याहुत्यौ वीरताम्रौ; K6 B3. 9 Da3. a4 Dn1. n4 Ds D2. 3. 8 संकोचोथ व( K6 प )रीताक्षो ( B9 °ख्यो ); K7 ह्वत्याह्वत्यो परीतात्मा; V1 विष्टोस्थीतो वीरताम्रो; Bo ऋकेथागांशौ (sic) वीरताम्रौ; B6 कृत्याकृत्यौ परीताक्षौ (marg. °क्षो ); B7 ***** रीताख्यो; B8 (marg.) ऋच्छोद्गाथौ वीरताम्रौ; D4. 9 हत्याहत्यो परीतात्मा; D5 ऋक्षहुक्शौ वीरताम्रौ; D6 हुत्वाहुत्वौ वरीताम्रौ; D7 T1 G1. 2 (first time). 3. 6 भृत्योद्धुतो हरीवाहो ( T1 G3. 6 °भावो ); T2 ह्वद्योद्धुतो हरिद्राभो; G2 (second time) भृत्थाभुत्थौ परीताम्रौ; M1. 6 ह्वताहुको ( M6 °ह्वतौ ) हरीताहो; M5 हुत्थाहुत्थौ परीताभो; M7 भृत्याहुको हरीताभो. —[b]) K4 वराहाक्षो; K7 D4. 9 T2 M1. 6. 7 वराहोश्व-; V1 Bo. 6 (marg.). 7. 9 Da3. a4 Dn4 D3. 6 व( Da4 वा )राहोश्वो; D7 T1 G1. 2 (first time). 3. 6 वाराहोश्व-; M5 मारवाश्वो (for वराहाश्वो). Ś1 K1. 2. 4 रुचिस्तथा; K6 Bo Dn1. n4 Ds1 D2. 8 °प्रभः; B7 Ds2 D3 रुचिः प्रभः; Da3. a4 रुचिः शुचिः; D6 M6 रुचिप्रभुः (for रुचिः प्रभुः). G2 (second time) वराहो यारुचः प्रभुः. —[c]) B9 अश्वजित् (for विश्व° ). Ś1 K1. 2. 4 प्रतिसौरिश्च; K6 V1 Bo. 8 Dn1. n4 Ds D2. 3. 8 M1. 6 °रूपश्च; K7 D4. 9 °सारश्च; D5 °सौरश्च (for °शौरिश्च ). —[d]) K2. 4 वृथांडो; K7 D4. 5. 9 विमांडो; B6. 7. 9 (orig.) T2 विषांडो; Da3. a4 विषासो; D6 वृभांडो; D7 T1 G1. 2 (first time). 3. 6 वृषाश्वो; G2 (second time) M1. 5–7 पाषंडो (for वृषाण्डो). Ś1 K1 वृक्षरो; K2. 4 वृक्षवो; K6 B6. 9 (both marg.) Dn1 Ds1 विस्करो; K7 B6 (orig.). 8 (marg. as in text). 9 (orig.) Da3. a4 D4–6. 9 G2 (second time) M1. 5–7 विक्षरो; Dn4 विश्वरो; D7 T1 G3. 6 वृष्करो; G1. 2 (first time) पुष्करो (for विष्करो). K4 मनुः (for मधुः).

53 For the repetition in G2, cf. v. l. 47. —[b]) Ś1 K1. 2 टीटिभश्; K4 lacuna (for कैट° ). K4 lacuna; K7 D9 चापि; D5 नाम (for चैव). G2 (second time) कैट******. —[c]) Ś1 K1 कालखंजश्च; V1 B6–9 Da3. a4 °कंजाश्च; D4 °षंजाश्च; D7 T G1. 2 (both times). 3. 6 M1. 5–7 °केया हि ( T2 G2 [ second time ] M1. 5–7 °याश्च ) (for °खञ्जाश्च ). K6. 7 Bo. 8 (marg.) Dn1. n4 Ds D2. 3. 8 दैतेया ( Bo °त्याश्च ) दानवाश्चैव.

54 For the repetition in G2, cf. v. l. 47. —[a]) T2 ये ते (for एते). —[b]) Da3. a4 पूर्व- (for पूर्वे). K7 D4. 9 पूर्वतरे (for पूर्वतराश्). —[d]) B8 (marg. as in text) प्रति-; Da3. a4 नानु- (for अनु-). K7 D8 D4. 6. 7. 9 T G1. 2 (both times). 3. 6 M1. 5–7 -शुश्रुमः (for -शुश्रुम).

55 [a]) M6. 7 -देवेंद्राः (for -दैत्येन्द्राः). B7. 9 Da3. a4 बहवो दैत्यपूर्वेंद्राः; G2 ऐश्वर्यं बहवः पूर्वं. —[d]) B8 कालोति( marg. कालो हि )दुरतिक्रमः.

56 [b]) K7 Da4 D4. 9 तत्त्वम् (for न त्वम्). G1 एवं; G2 एव (for एकः). D7 T1 G1. 3. 6 शतक्रतो. —[c]) G1 धर्मंचराश् (for °पराश्). —[d]) M1. 5. 6 संतत- (for सतत-).

57 [a]) K7 V1 Bo. 6–9 Ds1 अंतरीक्ष- (for °रिक्ष-). —[b]) Ś1 (by corr. as in text) K2. 4 [ऽ]भिमत्त-; D7 T G1–3. 6 सतत- (for ऽभिमुख-). —Da4 om. (hapl.) 57[d]–58[a].

58 Da4 om. 58[a] (cf. v. l. 57). —[b]) Ś1 K1. 2. 4 वै (for ते). K6. 7 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 M1. 5–7 -रूपिणः; V1 -योधिनः (for -चारिणः).

59 [a]) B6 (marg. as in text). 7. 9 Da4 G1 M1. 5–7 -व्रतधराः; T1 G3. 6 °चराः; G2 -व्रताचाराः (for -व्रत-

